# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 722.



# बृहद्देवता।

# BṚIHADDEVATÁ:

## AN INDEX TO THE GODS OF THE ṚIG VEDA,

BY
S'AUNAKA A'CHA'RYA.
EDITED BY
RA'JENDRALA'LA MITRA, C. I. E., LL. D.

FASCICULUS I.

CALCUTTA:
PRINTED BY G. H. ROUSE, AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1889.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL,

No. 57, PARK STREET, CALCUTTA.

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRUBNER & CO.
57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaita Brahma Siddhi, Fasc. I—III @ /6/ each .. | Rs. 1 | 2 |
| Agni Puráṇa, (Sans.) Fasc. II—XIV @ /6/ each .. .. | 4 | 14 |
| Aṇu Bháshyam, Fasc. I .. .. .. .. | 0 | 6 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /6/ each .. | 1 | 14 |
| Aphorisms of Sáṇḍilya, (English) Fasc. I .. .. .. | 0 | 6 |
| Aphorisms of the Vedánta, (Sans.) Fasc. VII—XIII @ /6/ each .. | 2 | 4 |
| Ashṭasáhasriká Prajnápáramitá, Fasc. I—VI @ /6/ each .. .. | 2 | 4 |
| Aśvavaidyaka, Fasc. I—V @ /6/ each .. .. .. | 1 | 14 |
| Avadána Kalpalatá by Kshemendra (Sans. & Tibetan) Vol. I Fasc. I .. | 1 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /6/ each .. .. .. | 3 | 0 |
| Brahma Sútra, (English) Fasc. I .. .. .. .. | 0 | 12 |
| Bṛihaddharma Puráṇam, Fasc. I—II @ /6/ each. .. .. | 0 | 12 |
| Bṛihat Áraṇyaka Upanishad, (Sans.) Fasc. VI, VII & IX @ /6/ each .. | 1 | 2 |
| Ditto (English) Fasc. II—III @ /6/ each .. .. | 0 | 12 |
| Bṛihat Saṃhitá, (Sans.) Fasc. II—III, V—VII @ /6/ each .. .. | 1 | 14 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /6/ each .. | 0 | 12 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III. Part I Fasc. 1—18, Part II, Fasc. 1—3 @ /6/ each .. .. | 21 | 6 |
| Chhándogya Upanishad, (English) Fasc. II .. .. .. | 0 | 6 |
| Daśarupa, Fasc. II and III @ /6/ .. .. .. | 0 | 12 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /6/ each .. .. | 4 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /6/ each .. .. | 1 | 2 |
| Kála Mádhava, (Sans.) Fasc. I—IV @ /6/ .. .. .. | 1 | 8 |
| Kátantra, (Sans.) Fasc. I—VI @ /12/ each .. .. .. | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. I—XIV @ /12/ each .. .. | 10 | 8 |
| Kaushitakí Brahman Upanishads, Fasc. II .. .. .. | 0 | 6 |
| Kúrma Puráṇa, (Sans.) Fasc. I—VIII @ /6/ each .. .. | 3 | 0 |
| Lalita-Vistara (Sans.) Fasc. II—VI. @ /6/ .. .. .. | 1 | 14 |
| Lalita-Vistara, (English) Fasc. I—III @ /12/ each .. .. | 2 | 4 |
| Madana Párijáta, (Sans.) Fasc. I—VI @ /6/ each .. .. | 2 | 4 |
| Manuṭíká Sangraha, (Sans.) Fasc. I—II @ /6/ each .. .. | 0 | 12 |
| Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /6/ each .. .. | 1 | 8 |
| Márkaṇḍeya Puráṇa (Eng.) Fasc I—II @ /12/ each .. .. | 1 | 8 |
| Mímáṃsá Darśana, (Sans.) Fasc. II—XIX @ /6/ each .. .. | 6 | 12 |
| Nárada Pancharátra, (Sans.) Fasc. IV .. .. .. | 0 | 6 |
| Nárada Smṛiti, (Sans.) Fasc. I—III @ /6/ .. .. .. | 1 | 2 |
| Nayavártikam, (Sans.) Fasc. I .. .. .. .. | 0 | 6 |
| [illegible]kta, (Sans.) Vol. I, Fasc. I—VI; Vol. II, Fasc. I—VI; Vol. III, Fasc. [illegible] Vol. IV, Fasc. [illegible]—VI @ /6/ each Fasc. .. .. | 9 | 0 |
| [illegible] Elements [illegible] Polity, By Kámandaki, (Sans.) Fasc. II—V .. .. .. .. | 1 | |
| [illegible] (Sans.) Fasc. III .. .. .. .. | 0 | 6 |
| [illegible]njali Prakaraṇam (Sans.) Vol. I, Fasc. I and II @ /6/ each | 0 | 12 |
| [illegible]ṇa Parvan (Sans.) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |

(*Continued on third page of Cover.*)

सम्प्रवादं रोमशये[क]न्द्रराज्ञो-
रेते त्यृचौ[१]मन्यते शाकपूणिः ॥ १५५ ॥
इन्द्रेण जायापत्योश्चेतिहासं
[२]त्यृचेऽस्मिन्मन्यते शाकटायनः ।
प्रादात्सुतां[३] रोमशां नाम नाम्ना
बृहस्पतिर्भावयव्याय राज्ञे ॥ १५६ ॥

इति बृहद्देवतायां तृतीयोऽध्यायः ॥

---

(१) सम्प्रवादमस्यस्या अथ चैव ताभ्यामेते त्यृचौ इति ख० ङ० पुस्तकान्तरस्थ ।

(२) द्व्यृचे इति ग० ।

(३) स तामिति ख० ङ० ।

---

(क) ऋ० १, १२६, ७ ।

13

# अथ चतुर्थोऽध्यायः ।

ततस्त[(१)]मर्थं हरिवान्[(क)]विदित्वा
प्रियं सखायं स्वनयं दिदृक्षुः ।
अभ्याजगामाशु शचीसखायः
प्रीत्यार्चयत्तं[(२)] विधिनैव[(३)]राजा ॥ १ ॥

अभ्याजगामाङ्गिरसी च तत्र
दृष्ट्वा[(४)]तयोः सा चरणौ च वन्दे ।
इन्द्रः सखित्वादथ तामुवाच
रोमाणि ते सन्ति न सन्ति राज्ञि ॥ २ ॥

सा बालभावादथ तां जगाद
उपोपमे शक्र परामृशेति ।
तां पूर्वयर्चाथ नृपः प्रहृष्टा-
दन्वव्रजत्सोऽथ पतिं तु साऽब्रवीत्[(५)] ॥ ३ ॥

---

(१) तत्सर्वमिति ख० ङ० पुस्तकान्तरञ्च ।

(२) प्रत्यर्चितं तमिति ख० ।

(३) प्रत्यर्चितोऽसौ विधिना चेति ङ० पुस्तकान्तरञ्च ।

(४) दृष्टेति ख० ङ० पुस्तकान्तरञ्च ।

(५) तां पूर्वया सान्त्वयन्टपः प्रहृष्टोवाच व्रजत्साथ पतिं पतिव्रतेति क० घ० च० ।

---

(क) ऋ० १, ८१, ४ ।

अथाग्नेये अग्निमित्युत्तरे य-
त्यञ्चैन्द्राणि प्रत[क]दैन्द्व्यृगच[१] ।
युवन्त[ख]मिन्द्रापर्वतौ[ग] सह स्तुता-
विन्द्रन्तु मेने यास्क एकं प्रधानं[२] ॥ ४ ॥
स्तुयेतर्चुः पर्वतो विद्धि वज्रो[३]
द्विवत्स्तुतौ चेन्द्रमाह[४] प्रधानं ।
आत्वावर्योरथ पञ्चेन्द्रवाय्वो[५]रेका
वायोरुत्तरं द्विप्रधानं ॥ ५ ॥
तच पञ्चवरुणं मित्रदेवा
द्दिवादिभ्यः[६] कथिताभ्यः परे द्वे
द्वे द्वे पदे संस्तुते[७] रोदसी च
देवास्त्वार्धर्चेन विभक्तमन्यत् ॥ ६ ॥

---

(१) अग्निमाग्नेये अत उत्तराणि पञ्चेन्द्राणि प्रतदैन्द्व्यृगेकेति ङ० पुस्तकान्तरञ्च ।
(२) त्विन्द्रन्तु मेन इह यास्कः प्रधानमिति क० घ० च० ।
(३) ऋचस्तुतः पर्वतद्धि यज्ञः इति क० घ० च० ।
(४) चन्द्रमाङ्गरिति क० घ० च० ।
(५) आत्वानवपञ्चेन्द्रवाय्वोरिति क० घ० च०, आत्वावायोस्त्वाथ पञ्चेन्द्र-वाय्वोरिति ग० ।
(६) द्विभ्य आद्याः इति ङ० ।
(७) द्वे वापरे संस्तुताविति ङ० ।

---

(क) ऋ० ८, १३, २७ । (ख) ऋ० ८, ७१, ४ । (ग) ऋ० ३, ५३, १ ।

मैत्रावरुणं सुसुमे[क]ति सूक्तं[१]
प्रप्र[ख]पोष्णं वैश्वदेवं द्वितीयं[२] ।
एतत्सूक्तं[३] वैश्वदेवं तृतीयं
वैश्वदेवं स्या[४]द्बहुदेवतेषु ॥७॥
बहुशस्तु वैश्वदेवेषु संस्तवः[५]
अर्धर्चा[६] द्विपदास्त्रिपदास्च ।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः[७] ॥८॥
वैश्वदेवीं मित्रावरुणी द्वितीया
तिस्रोऽश्विभ्यां तत ऐन्द्री ततोऽग्नेः ।
मारुत्येका तत ऐन्द्राग्न्यनन्तरा
वार्हस्पत्या चोत्तमा स्तौति देवान् ॥९॥

---

(१) सुषुमेतीह सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च ।

(२) तृतीयमिति क० घ० च० ।

(३) चस्तु श्रौषदिति ङ० ।

(४) वैश्वदेवं हि स्यादिति ङ० ।

(५) सन्त्यृचः इति क० घ० च० ।

(६) अर्धर्चाविति क० घ० च० ।

(७) अपि ता वैश्वदेव्यः इति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, १३७, ९ । (ख) ऋ० १, ४०, ७ ।

ऋषीनृषिर्वा स्तौति दध्यङ्मेऽस्या-
मात्मानं वा तेषु यं मन्त्वजन्म[१] ।
तस्मादस्यां विप्रवदन्ति केचित्
इन्द्राग्नी तस्यां तु[२] निपातभाजौ ॥१०॥
द्वावुचथ्य[क]वृहस्पती ऋषिपुत्रौ बभूवतुः ।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[३] वृहस्पतिर्मैथुनायोपचक्रमे ।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यषेधत[४] ॥१२॥
इहास्मिन् पूर्वसम्भूतो न कार्य्यः शुक्रसङ्करः ।
तच्छुक्रप्रतिषेधं तु न ममर्ष वृहस्पतिः[५] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति ।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽव्यतप[६]ल्लोकानेतस्मा[७]दन्धतां गतः ।

---

(१) एवाथर्व्वाणः स्तौति प्राग्रपंस जन्मेति क० घ० च०। एवाथर्व्वाणा इत्यत्र अहमेवाथर्व्वाणः इति ग०।

(२) केचिदैन्द्री त्वेवेति क० घ० च०।

(३) कनीयानिति क० घ० च०।

(४) प्रत्यभाषतेति क० ग० घ० च०।

(५) तं शुक्रप्रतिष्ठानं तु वृहस्पतिरमर्षयदिति ङ०।

(६) अभ्यतपदिति ख० घ०, अभ्यवददिति ग० ङ० पुस्तकान्तरञ्च।

(७) अकस्मादिति ख० ग० ङ०।

---

(क) ऋ० ८, ४६, २८।

ददुर्देवा स्तुता नेत्रे ततोऽनन्धो बभूव च[१] ॥१५॥
स वेदिषद इत्यस्तौ[२]च्चतुर्भिर्जातवेदसं।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्[३] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः।
मित्रं मैत्री वदत्येता[४] माधेनवस्य शंसति ॥१७॥
अदितिं वाथ वाप्यग्निं तथा रूपं हि दृश्यते।
अग्निं मेने दितिं त्वेव कुत्से चेह[५] च शौनकः ॥१८॥
ऋषिरत्र प्रसङ्गाद्वा दर्शनाद्वानुकीर्तयेत्[६]।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
प्रवः पान्तं चतुर्भिस्तु[७] इन्द्राविष्णू सह स्तुतौ।
गृहाणि वा वैष्णवानि ऋषिस्त्वेत्यृचि[८] कांचति ॥२०॥

---

(१) तु तस्याद्दौ नैते न त्वन्धतां गत इति क० घ० च०।

(२) इत्याद्यैरिति ङ०।

(३) आप्रः परैन्द्री षड्भिः त्वग्निं तमित्यत इति क० घ० च०, आप्रि-
त्योन्त्यैन्द्री प्राग्ध्वाग्नेः पराणि चेति ग०.।

(४) मैत्रीव देव्येतामिति ङ०।

(५) यास्कः कुत्सो वेहेति ङ० पुस्तकान्तरञ्च।

(६) ऋषिरग्नेः प्रसक्तत्वाद्दृष्ट्वाग्नीनन्वकीर्त्तयदिति ङ०।

(७) प्रवस्वतस्तृभिर्ऋग्भिरिति ग०, तावां चतस्तृभिर्ऋग्भिरिति ङ०
पुस्तकान्तरञ्च।

(८) तावामित्यृचीति ग० ङ० पुस्तकान्तरञ्च।

जीर्णन्तु दीर्घतमसं खिन्नास्तत्परिचारिणः[१]।
दासा अथ[२] नदीतोये दृष्टिहीनमुपादधुः[३] ॥२१॥
तत्रैकस्त्रैतनो[४](क) नाम शस्त्रेणैनमपाहनत्।
शिरस्त्वंसावुरश्चैव स्वयमेव न्यकृन्तत[५] ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिदन्[६]।
[७]जनयामास चोत्थाय[८] कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारकाः इति ख० ङ० पुस्तकान्तरञ्च।

(२) दासा बध्वेति क० घ० च०।

(३) ह्यवादधुरिति क० घ० च०।

(४) त्रैनतः इति क० घ० च०।

(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

हत्वा दीर्घतमास्तं तु पापेन महता हतम्।
आत्माङ्गान्यनुदश्चैव ततोऽदान्मोहितो भृशम्॥

इत्यधिकं पठितम्।

(६) तं न्टपं समुदक्षिपदिति ङ० पुस्तकान्तरञ्च।

(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

अङ्गराजगृहे युक्ता सुदेष्णं पुत्रकाम्यया।
राज्ञा च प्रहितां दासीं भक्तां मत्वा महातपाः॥

इत्यधिकं पठितम्।

(८) सोऽजीजनद्दासैकादिति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १५८, ५।

तुष्टाव चैव सूक्ताभ्या(१)मबोधीत्यश्विनादृषिः ।
प्रेति द्यावापृथिव्यौ तु(२) पराभ्यामेतदुत्तरं ॥२४॥
किमाभवं परं(३) मानो मेध्यस्याश्वस्य संस्तवः ।
ईर्मां(क)ता स इति त्वश्वां नीयमानं प्रशंसति ॥२५॥
स्वयूथ्यास्तस्य चैवात्र बहवः संस्तुता हयाः ।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिताः ॥२६॥
संज्ञप्तवदसंज्ञप्तं हविष्यं(ख) चाह सूनवः(४) ।
तस्मिन्मांसस्य सूनस्य चतुर्षां हविषस्तथा(५) ॥२७॥
वासोऽधिवाससोश्चात्र स्वधिते(ग)श्च प्रकीर्त्तनं(६) ।
गात्रशूलस्थूणाना(घ)ञ्च(७) स्वधितेश्च प्रकीर्त्तनं(८) ॥२८॥

---

(१) वेति वसुताभ्यामिति ङ० पुस्तकान्तरञ्च।

(२) द्यावापृथिव्यातेति ङ० पुस्तकाष्टञ्च।

(३) परे इति ङ० पुस्तकान्तरञ्च।

(४) भविष्यं चाह भूतवत् इति ख० ङ० पुस्तकान्तरञ्च।

(५) चतुर्णां हविषस्तथेति ग०, तत्सौनस्यं च मांसस्य चरूणां च विषान्तथेति ङ० पुस्तकान्तरञ्च।

(६) यद्दिग्रस्यञ्च कीर्त्तितमिति ख० ग०, वासाधिवाससोश्चात्र यज्ञीयस्य च कीर्त्तनमिति ङ०।

(७) गात्रसूत्यस्युषाणाञ्चेति ख० ङ०।

(८) क० घ० च० चिह्नितपुस्तकेषु, गात्रसूलस्थूणानाञ्चेतिश्लोकार्द्धं न पठितम्।

---

(क) ऋ० ४, २७, २। (ख) ऋ० १, १६२, ४। (ग) ऋ० १, १६२, १८। (घ) ऋ० ५, ६२, ७।

भागस्य[१] कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः[२]।
सूक्तं यदस्य[३] वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं।
अग्निस्तु वामः पलितो[क] वायुर्भ्राता तु मध्यमः ॥३०॥
घृतपृष्ठ[ख]स्तृतीयोऽत्र[४] सप्त वै रश्मयस्तु ताः।
परास्तु कथयन्त्यग्निं[५] यथा वर्षति पाति[६] च ॥३१॥
अहोरात्रदिना[७]न्मासानृतूंश्च परिवर्त्तनं[८]।
पञ्चधा त्रिविधा[९] चैव षोढा द्वादशधैव च[१०] ॥३२॥
संवत्सरं चक्रवच्च पराभिः कीर्त्तयन्नृषिः।

---

(१) छागस्येति ग० ङ०

(२) इन्द्रापूष्णोस्च कीर्त्तनमिति ख० ङ०।

(३) पदस्येति ङ०।

(४) तृतीयोक्तः इति ङ०।

(५) अग्निरिति ङ०।

(६) वातीति ख० ङ०।

(७) अहोरात्रान् दिनानिति ङ०।

(८) पक्षांश्च परिकीर्त्तनमिति ङ०।

(९) पञ्चधा च त्रिधेति ख० ङ०।

(१०) द्वादशधापि वेति ङ०।

---

(क) ऋ० १, १४४, ४। (ख) ऋ० १, १६४, १।

क्षेत्रज्ञानं[१] च धेनुञ्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्म्मं पूर्व्वयुगीयञ्च[२] साध्यान् देवगणांस्तथा ।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोस्च जगती स्थान[३]जङ्गमे ।
हरणं रश्मिभिश्चैव[४] विसर्गं[५] पुनरेव च ॥२५॥
कर्म्मानुकीर्त्तनञ्चात्र[६] पर्जन्याग्निविवस्वतां ।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणं[७] वाचं प्राहुः सरस्वतीं ।
शरीरमिन्द्रियैर्युक्तं क्षेत्रमित्यभिधीयते ॥२७॥
वेद तत्प्राण[८] एवैकस्तस्मात् क्षेत्रज्ञ उच्यते ।
मेघः[९] शक[क] स्तस्य धूमः[१०] सलिलं वास एव वा ॥२८॥

---

(१) क्षेत्रज्ञानमिति ग०, क्षेत्रं ज्ञानमिति ङ० ।
(२) पूर्व्वयुगानाञ्चेति ख० ङ०, धर्म्मपूर्व्वयुगौ यश्चेति ग०,
(३) जगति स्थास्त्विति ख० ङ० ।
(४) वारः इति ख०, वारामिति ङ० ।
(५) विसर्पमिति ख० ।
(६) चास्येति ख० ङ० पुस्तकान्तरञ्च ।
(७) प्राणः इति क० ग० घ० च० ।
(८) वेत्त्येतत्प्राण इति ङ० ।
(९) मेघे इति ख० ।
(१०) धूमे इति ख० ।

---

(क) ऋ० ८, ८०, ३ ।

सोम उचा[क]भवन्त्यस्य पावकाश्च त्रयोऽधिपाः।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३९॥
इन्द्रं मित्रमिमौ सौर्य्यौ सौरी चान्या सरस्वते[१]।
मारुतेन्द्रस्तु संवादः कयेति[२] परमः स्मृतः[३] ॥४०॥
मरुतामयुज[४]स्त्वैन्द्यो युग्माः सर्व्वाः[५] सहान्यया।
एकादशी प्रथमा च मारुतस्तृच उत्तमः[६] ॥४१॥
तृचस्यैव तु तत्रोक्तं कर्त्तृत्वमितरस्य तु।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते[७] ॥४२॥
समागच्छन्मरुद्भिस्तु[८] चरन् व्योम्नि शतक्रतुः।

---

(१) क० ख० घ० च० पुस्तकेषु, मेघः शकस्तस्य धूम इत्यादि सौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च अत्र स्थले,—

सूक्तमत्यस्तवं त्वेतज्ज्ञानमेव प्रशंसति।
प्रवादबहुलत्वाच्च ततः सलिलमुच्यते ॥

इति पाठो वर्त्तते।

(२) कवेतीति ख०।

(३) ततः इति ख० ङ०।

(४) मरुजः इति ङ०।

(५) तत्रेति ङ०।

(६) उत्तरः इति ग०, मारुत्यस्तिस्र उत्तरा इति ङ० पुस्तकान्तरस्य।

(७) तृचस्यैव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेच्यते।

(८) चेति ख० ङ०।

---

(क) ऋ० १, १४६, २।

दृष्ट्वा तुष्टाव तानिन्द्रस्तेनैन्द्र[१]मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद[२]तत्त्वतः।
स तानभिजगामाशु निरूप्यैन्द्रं हविस्तदा ॥४४॥
मरुतश्चाभितुष्टाव सूक्तैस्तदिति च[३] त्रिभिः[४]।
महश्चिदिति चैवेन्द्रं सहस्रमिति चैतया[५] ॥४५॥
निरुप्तं तद्धविश्चैन्द्रं मरुद्भ्यो दातुमिच्छति[६]।
विज्ञायावेत्य तद्भव्यं त्विन्द्रो[७] नेति तमब्रवीत्[८] ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं।
कस्यचित्त्वथ सञ्चारे[९] चित्तमेव विनश्यति ॥४७॥
किन्न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव।
मरुद्भिः सम्प्रकल्पस्व[१०]वधीर्मा च[११] शतक्रतो ॥४८॥

---

(१) ते चैन्द्रमिति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) तपसाबोधीति ख० ङ० पुस्तकान्तरञ्च।
(३) तन्विति त्विति क० घ० च०।
(४) तन्विति पञ्चभिरिति ग०।
(५) महश्चिदित्यनेनैन्द्रं सहस्रं त ऋचाव्ययमिति ख० ङ० पुस्तकान्तरञ्च।
(६) इच्छथेति ख०, इच्छतः इति ङ० पुस्तकान्तरञ्च।
(७) तद्भावमिन्द्रः इति ख० ङ० पुस्तकान्तरञ्च।
(८) ततोऽब्रवीदिति ख० ङ० पुस्तकान्तरञ्च।
(९) त्वर्थसञ्चारे इति ख० ङ० पुस्तकान्तरञ्च।
(१०) सम्प्रकल्पस्वेति ख० ङ० ॥
(११) मा नः इति ख० ङ० पुस्तकान्तरञ्च।

किं नो भ्रातरिति त्वस्यामिन्द्रो मान्यमुपालभत्।
अगस्त्यस्त्वरमित्यस्यां चुक्ष्[(१)]मिन्द्रं प्रशामयत्[(२)] ॥४९॥
प्रादात्संवननं[(३)] कृत्वा तेभ्य एव च तद्धविः।
पूर्व्वया सान्त्वयन्निन्द्रो ह्यगस्त्यं स्नेहकाम्यया ॥५०॥
एवं संवननं कृत्वा प्रादात्तेभ्यः स तद्धविः[(४)]।
सुते[(५)] चकार सोमे च[(६)] तानिन्द्रः सोमपीथिनः[(क)] ॥५१॥
तस्माद्दिव्यान्निपातेन[(७)] ऐन्द्रेषु[(८)] मरुतस्तु तान्[(९)]।
प्रीतात्मा पुनरेवर्षिस्तांस्तुष्टाव पुनः पृथक्[(१०)] ॥५२॥
मरुतः प्रेति सूक्ताभ्या[(११)]मिन्द्रं षड्भिः परैस्तु सः[(१२)]।

---

(१) क्रुद्धमिति ख० ङ० पुस्तकान्तरञ्च।
(२) प्रसादयदिति ख० ङ०, प्रसाधयदिति पुस्तकान्तरम्।
(३) सङ्गमनमिति क० ग० घ० च०।
(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठः, क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(५) सूते इति ग०।
(६) सोमेऽथेति ख० ङ० पुस्तकान्तरञ्च।
(७) निपातेष्विति ङ० पुस्तकान्तरञ्च।
(८) नन्द्रेष्विति ख०।
(९) मरुतः स्तुताः इति ङ० पुस्तकान्तरञ्च।
(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरञ्च।
(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरञ्च।
(१२) गायन् षड्भिः शचीपतिरिति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, १५, ८।

ऋतुस्नाता[१] मृषिर्भार्यां लोपामुद्रां यशस्विनीं ॥५, ३॥
उपजल्पितुमारेभे रहःसंयोगकाम्यया ।
द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५, ४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ॥५, ५॥
उक्तैनं[२] कृतवानस्मिन्[३] ब्रह्मचार्य्युत्तमे जगौ ।
प्रशंस्य[४] तं परिष्वज्य गुरू मूर्द्ध्न्यवजिघ्रतुः ॥५, ६॥
स्निग्धेनमाहतुस्त्वोभावनागा असि[५] पुत्रक ।
युवो[क]रजांसीति ततः सूक्तैः पञ्चभिरश्विनौ ॥५, ७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तुण[६] ।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकसः ॥५, ८॥
पितु[ख]मन्नं समिद्धाग्न्यो अग्निमग्ने नयेति च[७] ।
बृहस्पतेरनर्वाणं[ग] कंकतोपनिषत्परं[८] ॥५, ९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः ।

---

(१) ऋतौ स्नातामिति क० घ० च० ।
(२) न त्वेनः इति ख० ग०, नत्वेतदि ङ० पुस्तकान्तरञ्च ।
(३) त्वसीति ख० ग० ङ० ।
(४) प्रशस्येति ग० ङ० ।
(५] चोभौ ह्यनागोऽसीतीति क० ग० घ० च० ।
(६) कतरेति परेत्य त्विति क० घ० च०, सूक्तेन कतरेति त्वि ङ० ।
(७) समिद्धो ह्याप्रियोऽग्ने च नयाग्नये इति ख० ङ० पुस्तकान्तरञ्च ।
(८) परेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ३४, १। (ख) ऋ० १, ६१, ७। (ग) ऋ० १, ३७, १।

ददर्श तदगस्त्यो वा[१] विषण्णं विषण्णकया ॥६०॥
अदृष्टाख्यो विश्वरूपः[२] सूक्तस्यांशोऽत्र तु त्यृचः[३] ।
अस्तौ[४]त्गृत्समदोऽग्निं त्वं[५] जातवेदस[६]माप्रियः ॥६१॥
यज्ञेनाथ समिद्धोऽग्निरतोऽग्निं[७] सप्तभिर्जवे[क] ।
संयुज्य[८] तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः ॥६२॥
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च ।
तमिन्द्रमिति मत्वा तु[९] दैत्यौ भीमपराक्रमौ ॥६३॥
धुनिश्च चुमुरिश्चैव[१०] सायुधावभिपेततुः ।
विदित्वा स तयोर्भावमृषिः[११] पापचिकीर्षतोः ॥६४॥
यो जात इति सूक्तेन कर्म्माण्यैन्द्राण्यकीर्तयत् ।

---

(१) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(२) अदृष्टाख्यो नष्टरूपः इति ख० ङ० पुस्तकान्तरञ्च ।
(३) द्व्यृचः इति ग० ।
(४) स्तौतीति ङ० पुस्तकान्तरञ्च ।
(५) अग्नित्वमिति ग० ङ० ।
(६) जातवेदस्यमिति ख० ग० ।
(७) चातोऽग्निमिति क० घ० च०, अग्निरिति ङ० ।
(८) संयोज्येति ख० ङ० पुस्तकान्तरञ्च ।
(९) तौ इति ङ० ।
(१०) चोभाविति ख० ङ० पुस्तकान्तरञ्च ।
(११) ह्यृषिरिति क० घ० च० ।

---

(क) ऋ० १, १७, ७ ।

उक्तेषु[१] कर्म्मस्वैन्द्रेषु भीस्तावाशु विवेश ह[२] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत्।
निहत्य तौ गृत्समदमृषिं[३] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मास[४]खे पश्य प्रियस्त्वं[५] ह्यागतोसि[६] मे।
वरं गृहाण मत्तस्त्वमचयं[७] चास्तु ते तपः ॥६७॥
प्रह्व[८]स्तं प्रत्युवाचर्षिरस्माकं वदतां वरः[९]।
तनूनामस्तु चारिष्टिर्वाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]स्च वयन्त्वामिन्द्र धीमहि[१०]।
इन्द्र[११]त्वाञ्च विजानीमो वयं जन्मनि[१२] जन्मनि ॥६९॥

---

(१) कीर्त्त्येष्विति क० घ० च०।
(२) भीतौ सुषुपतुस्तदेति ख० ङ० पुस्तकान्तरञ्च।
(३) इदमिति ङ० पुस्तकान्तरञ्च।
(४) मांसमिति पाठः सङ्गतः।
(५) मास खे पश्य प्रियस्त्वमिति क० घ० च०। अत्र, मांसं खे पश्यं प्रियस्त्वमिति पाठो विशुद्धः।
(६) प्रियत्वं चागतोऽसीति ङ०।
(७) मत्तस्त्वाद्भयमिति क० घ० च०।
(८) प्रह्वः इति क० घ० च०।
(९) वरेति क० ग० घ० च०।
(१०) इन्द्र वामहे इति ख०, इन्द्रमीमहे इति ङ०।
(११) इन्द्रमिति ङ०।
(१२) ह्यजनीति क० ग० घ० च०।

---

(क) ऋ० ६, १३, ५। (ख) ऋ० १०, ७४, १।

त्वद्गत[१]स्त्वेष मे भावो मापगास्त्वद्रथीतरः[२] ।
निरुक्तं तदिदं चार्षमिन्द्रश्रेष्ठान्यचान्यया ॥७०॥
वव्रे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः[३] ।
तथेत्युक्त्वा तुराषाट् त्वां[४] पाणौ जग्राह दक्षिणे ॥७१॥
ऋषिश्चास्य सखित्वेन पाणिना पाणिमस्पृशत् ।
सहितौ जग्मतुश्चैवं महेन्द्रसदनं[५] प्रति ॥७२॥
तत्रैनमार्हयत्प्रीत्या स्वयमेव पुरन्दरः ।
कर्म्मणा विधिदृष्टेन तमृषिश्चाभ्यपूजयत्[६] ॥७३॥
सखित्वाच्च पुनस्तेन[७]सुवाच हरिवाहनः ।
गृणन्माद्यसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो[८] भविष्यसि ।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं श्रुधी[९][क]त्यृषिः ॥७५॥

---

(१) त्वां तत इति क० घ० च० ।
(२) मापागाच्च रथीतरः इति ङ० पुस्तकान्तरञ्च ।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० घ० च० चिह्नितपुस्तकेषु, नोपलभ्यते ।
(४) त्वामित्यत्र तमितिपाठः शुद्धः। रथाङ्गन्त्विति ख० ङ० पुस्तकान्तरञ्च ।
(५) महेन्द्रभवनमिति ख० ङ० पुस्तकान्तरञ्च ।
(६) वाभ्यपूजयदिति क० । तमृषिं चाभ्यपूजयदिति ख० ग० घ० च० ।
(७) एवमिति पुस्तकान्तरम् ।
(८) शौनकोऽत्र इति ख० ।
(९) इन्द्रश्रुधीत्यृषिरिति क० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, २५, १९ ।

ददर्श संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम्।
वृहस्पतिं तु तुष्टाव दृष्टलिङ्गाभिरेव च[१] ॥७६॥
स तमप्यभितुष्टाव[२] चतुर्भिरत[३] उत्तरैः।
गणानां विश्वमित्यस्यां[४] सहेन्द्राब्रह्मणस्पती ॥७७॥
वृहस्पतिं प्रसङ्गाद्वा[५] ब्रह्मणस्पतिमेव च[६]।
तुष्टाव कर्म्मणैकेन प्रभावस्यान्तरन्तयोः[७] ॥७८॥
मित्रावरुणदक्षांश्चतुविजात[क]भगार्य्यम्णाम्[८]।
आदित्यानामिमाः [९]सूक्तमिदं वारुणमुच्यते[१०] ॥७९॥

---

(१) वृहस्पतिस्तु तुष्टाव दृष्टि लिङ्गस्तवैः सहेति ख०, दृष्टलिङ्गस्तवैः सहेति ङ०।

(२) अभ्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।

(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ङ०, चतुर्भिरेत उत्तरैरिति पुस्तकान्तरम्।

(४) अस्या इति ङ०, विश्वामित्रस्येति ख०।

(५) प्रसक्तत्वादिति ख० ङ०।

(६) ब्रह्मणस्पतिमेव वेति ङ०।

(७) द्वयोरिति ग०। श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्नोपलभ्यते।

(८) तुविजातभगार्यमामिति ख०।

(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।

(१०) वरुणमिति ग०।

---

(क) ऋ० १, १३१, ७।

(१)धृतव्रता वैश्वदेवस्तृतमैन्द्रं परन्तु यत्(२)।
प्रहि क्रतुमिति त्वस्यामिन्द्रासोमौ सह स्तुतौ ॥८०॥
सरस्वति त्वमित्यस्मिन्नर्द्धर्चे मध्यमा तु वाक्(३)।
बृहस्पतिन्तु यो नस्तु(४) उत्तमा मरुतस्तुतिः(५) ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु(६)।
द्यावापृथिव्योर्द्वे त्वाद्यौ(७) तथैवैन्द्र्यौ(८) परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः षड्लैङ्ग्योग्यास्तथान्तया(९)।
(१०)रौद्रं मारुतन्तु परं(११)मा ते धारावरा इति ॥८३॥

---

(१) वारुणीयो म इत्याद्या दुःस्वप्नाद्यप्रणाशिनीः। श्लोकार्द्धमेतत् ग० चिह्नितपुस्तके धृतव्रतेति श्लोकात् पूर्व्वमधिकं पठितं।

(२) परं यत इति ख०, परं तत इति ङ०।

(३) माध्यमानुवागिति ख०।

(४) बृहस्पते स्तुतिर्यो मा इति ख०, यो न स्त इति ग०।

(५) बृहस्पते स्तुतिर्यो उ स्तम्बऋड्मरुतां स्तुतिः इति ङ०।

(६) अस्माकं वैश्वदेवं स्यात् सूक्तादावस्य चास्य ऋगिति ग०, स्यादद्या ऋक् चान्तिमास्य त्विति ङ० पुस्तकान्तरञ्च।

(७) ऋगद्यावापृथिवीत्यृचेति क० घ० च०, द्यावापृथिव्योस्त्वाद्यौ वै इति ख०। वै इत्यत्र वा इति ग०।

(८) वाथ चैन्द्रा इति ग०, चैन्द्रौ वर्वौ इति ङ० पुस्तकान्तरञ्च।

(९) तथान्त्ययेति ग०, षड्भुगवाद्यन्तया स्तुताः इति क० घ० च०।

(१०) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वे द्वे ऋचौ कुह्वाः कुह्वमहमिति स्तुते। तदुत्तरे द्वे अनुमतेरनुनो न्विति ते स्तुते। धातुस्तवस्तत्रादौ धाता दधाति नो रयिम्(क)। इत्यधिकं पठितं।

(११) रौद्रं स्यात् परमारुतमिति पुस्तकान्तरम्।

---

(क) ऋ० १, १, ३।

वामदेवो मृगान् दृष्ट्वा बिभ्यत्तेभ्य ऋषिः स्वयम्[१]।
[२]अपान्नपादुपेत्यत्र स्तुतः सूक्ते ततः[३] परे ॥८४॥
तुभ्यमित्यार्भवे[४] सूक्ते साविचादाश्विनम्परम्[५]।
सोमः पूषादितिश्चैव सोमापूष्णोन्यया स्तुताः ॥८५॥
वायव्ये[६] वैन्द्रवायव्या अन्यास्तु प्रउगा[क]स्तृचाः[७]।
प्रेत्यृक् स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ॥८६॥
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे।
[८]स्तुतिन्तु[९] पुनरेवेच्छन्निन्द्रो भूत्वा कपिञ्जलः ॥८७॥

---

(१) वामतस्तु मृगान् स्तौत्यध्वनि निप्रस्थितांस्तु हि। इति क० घ० च०, मृगं दृष्ट्वेति ग०।

(२) ग० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च अपान्नपादित्यस्मात् पूर्वं स्तुहि श्रुतमिति त्वस्यां रुद्रमस्तौत्प्रसादयन्नित्यधिकं पठितं।

(३) त्वत इति पुस्तकान्तरम्।

(४) इत्यार्तवे इति ख० ङ० पुस्तकान्तरञ्च।

(५) श्लोकार्द्धमेतत् ग० चिह्नित पुस्तके नोपलभ्यते।

(६) वायव्यै इति ग०।

(७) वायव्ये चैन्द्रवायवी पश्चाथ प्रउगास्तृचा इति क० ग० घ० च०।

(८) ङ० चिह्नितपुस्तके पुस्तकान्तरे च स्तुतिमिति श्लोकार्द्धात् प्राक्, वासवोयो म इत्येषा दुःस्वप्नाद्यप्रणाशिनीति श्लोकार्द्धमधिकं दृश्यते।

(९) स्तुतन्त्विति ख०।

---

(क) ऋ० १०, १३०, ३।

ऋषेर्जिगमिषोराशां ववाशा[क]स्याय[१] दक्षिणाम् ।
स तमार्षेण सम्प्रेक्ष्य चक्षुषा पक्षिरूपिणम् ।
पराभ्यामभितुष्टाव सूक्ताभ्यान्तु कनिक्रदत्[ख] ॥८८॥

प्रशास्य गायंस्तपसाऽभ्यगच्छ[२]-
द्ब्रह्मर्षितामेकशतञ्च पुत्रान् ।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परञ्च[३] ॥८९॥

वैश्वानरीयेति[४] समित्समिद्धा
प्रोद्वे आग्नेये[५] उत्तरे त्वत्र[६] सूक्ते ।
द्यावापृथिव्यौ तु निपातभाजा[७]
वापोऽथ देवाः पितरश्च मित्रः[८] ॥९०॥

आग्नेयेषु दृश्यन्ते स्तुतास्तु[९]-

(१) ववासे प्रतीति ख० ङ० पुस्तकान्तरञ्च ।
(२) अभ्यगच्छन्निति ङ० पुस्तकान्तरञ्च ।
(३) नेत्यग्नये तत्परे चेति ख० ङ० पुस्तकान्तरञ्च ।
(४) वैश्वानरीयेऽथेति ख० ङ० पुस्तकान्तरञ्च ।
(५) प्रियो द्वे चेति ख० ङ० पुस्तकान्तरञ्च ।
(६) त्वस्येति ख० ङ० पुस्तकान्तरञ्च । उत्तरेत्यत्रेति ग० ।
(७) द्यावा पृथिव्या उषसो निपाता इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) आपोऽथ देवा पितरोऽथ मित्र इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) क० घ० च० चिह्नितपुस्तकेषु स्तुतास्तु इत्यत्र तु इति पाठो न दृश्यते ।

(क) ऋ० २, २, २ । (ख) ऋ० १, १२८, ३ ।

वैश्वानरो वरुणो जातवेदाः।
स्तूयेतैका यत्र यत्रास्तुतिर्वा[१]
नैपात्यांस्तां[२]श्चोपमार्थांश्च[३] विद्यात् ॥९१॥
राजर्षयो गृत्समदा वसिष्ठा
भरद्वाजाः कुशिको गौतमाश्च।
विश्वेऽश्विनावङ्गिरसोऽत्र योऽदिति-
र्भाजाः कण्वो[४] भृगवो रोदसी दिशः ॥९२॥
सावित्रसौम्याश्विन[५]मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्यौषसेषु[६]।
आदावन्ते सूक्तमध्ये स्तुतास्तु[७]
न व्याप्नन्ति देवताः सूक्तभाजः[८] ॥९३॥
अग्नेः सप्तदशोऽध्याय ऊर्द्ध ऊषुण ऊतये[क]।

---

(१) एको यत्र तत्रान्यस्तुतिर्वेति ख० ङ० पुस्तकान्तरञ्च।
(२) निपातघर्थाः इति क० ग० घ० च०।
(३) उपमार्थांश्चेति पाठः साधुः।
(४) कल्या इति ख० ङ० पुस्तकान्तरञ्च।
(५) सौर्य्याश्विनेति ख० ङ० पुस्तकान्तरञ्च।
(६) सौम्यौषसेष्विति ख० ङ० पुस्तकान्तरञ्च, औषिसेष्विति च०।
(७) स्तुतास्ताः इति ङ० पुस्तकान्तरञ्च।
(८) भ्रन्ते देवतां सूक्तभागिनीमिति पुस्तकान्तरम्, सूक्तभाजा इति ग०, सूक्तभागिनामिति ङ०।

---

(क) ऋ० १, ४, १।

6090

एते काण्व्यावृचौ यौप्यौ ह्यञ्जन्ति लेति पञ्च च[१] ॥९४॥
ग्रेषा बज्भ्यो यूपेभ्यो[२] वैश्वदेवी त्वृगष्टमी[३] ।
अंस्या[क]न्त्या त्रश्चिनी योक्ता[४] षष्ठमैन्द्राग्न[५]मुच्यते ॥९५॥
वैश्वदेव्यग्निमुषसं[६] दधिक्राव्णेति[७] चैतया ।
आग्नेन्द्री त्वग्न इन्द्रेति परा[८] वैश्वानरस्तृचः ॥९६॥
प्रयन्तु मारुता[९]स्त्वान्त्या ग्रतधारङ्कुरुस्तवः ।
प्र वो वाजा ऋत्वं[१०] स्तौति ऋत्विजः स्तौति[११]मन्यतः॥९७॥
पुरीष्यास[१२] [ख]इति त्वस्याग्न्धिष्ण्यानग्नीन् प्रग्रंसति ।

---

(१) एते काण्वावृचौ चोभौ यौप्यौ ह्यञ्जन्ति पञ्च चेति ख० ।
(२) ग्रेषेभ्यो बज्जयूपेभ्य इति ग० ।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्वृगष्टमीति पुस्तकान्तरम् ।
(४) स्यान्ता प्रत्रस्वना योक्तेति च० ।
(५) स्यान्ताः प्रत्रस्वनाः योक्तोन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च ।
(६) अग्निमुषसं वैश्वदेवीति क० ख० ग० घ० च० ।
(७) दधिक्रामितीति क० ग० घ० च० ।
(८) अग्नीन्द्री त्वग्न इन्द्रस्वक् परेति ङ० पुस्तकान्तरञ्च ।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) ऋतूनितिपाठः समीचीनः ।
(११) स्तौति ऋत्विजस्त्वेवेति ख० ङ० पुस्तकान्तरञ्च ।
(१२) पुरीष्यास इति ग० ।

---

(क) ऋ० १, १९१, ७ । (ख) ऋ० ३, २२, ४ ।

ज्ञेया[१]श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु[२] ॥९८॥
त्रयोविंशतिरैन्द्राग्नी इच्छन्तीति पराण्यतः।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे[३] ॥९९॥
[४]पुरोहितः सन्निज्यार्थं सुदासः सोऽहरद्धनम्।
विपाट्छुतुद्र्योः सम्भेदं शमित्येते उवाच ह ॥१००॥
प्रवादास्तत्र दृश्यन्ते द्विवद्बहुवदेकवत्।
अच्छेत्यर्द्धर्चे पच्छो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये द्वृचे द्विवत्सार्द्धे विश्वामित्रवचःश्रुतेः।
एनाभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
षष्ठ्यष्टम्यो[५]श्चतुर्थ्याश्च दशम्याश्चेतरा ऋषेः।
सप्तम्यामृचि षष्ठ्याञ्च यौ देवौ[६] परिकीर्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ लैन्द्रापार्वत्यृगुत्तमे[७]।
करोति पुत्रिकां नारी[८] यथा दुहितरन्तथा ॥१०४॥

---

(१) यूपा इति ख०।
(२) तत्र हेति ख० ङ०।
(३) विश्वामित्रः समूहिरे इति ख० ग० पुस्तकान्तरञ्च, स संवदन्निति क० घ० च०।
(४) पुरोहित इत्यादि श्लोकत्रयं क० घ० ङ० चिह्नितपुस्तकेषु नोपलभ्यते।
(५) षष्ठ्यष्टम्योरिति पाठः साधुः।
(६) यौदकौ इति ग०।
(७) पार्वत्यर्गुक्तमेति ङ० पुस्तकान्तरञ्च।
(८) नामेति ख० ङ० पुस्तकान्तरञ्च।

तस्यां सिञ्चति रेतो वा[१] तच्छाससदिति कीर्तितम्।
रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते[२] ॥१०५॥
तस्यास्त्वेव[३] यवीयांसं भ्रातरं ज्येष्ठवत्सुतं।
सुदासस्य महायज्ञे दक्षिणा गाधिसूनवे[४] ॥१०६॥
निगृहीतं बलाच्चेतः[५] सोऽवसीदद्विचेतनः।
तस्मै [६]ब्राह्मीन्तु सौरीं वा नाम्ना वाचं ससर्परीं ॥१०७॥
सूर्य्यक्षयादिहागत्य ददुस्ते[७] जमदग्नयः।
कुशिकानां ततः सा वागमतिन्तामपाहनत् ॥१०८॥
उपेत्य चास्यां[८] कुशिकान् विश्वामित्रो बुवोध यत्।
लब्ध्वा वाचं च हृष्टात्मा[९] तानृषीन् प्रत्यपूजयत्[१०] ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाचं स्तुवन् स्वयम्।
स्थिरावित्यनसो[क]ऽङ्गान्यनडुह[११]श्च गृहान् व्रजन् ॥११०॥

---

(१) रेतो धा इति ङ० पुस्तकान्तरञ्च।
(२) प्रतिषेधतीति ख० ङ० पुस्तकान्तरञ्च।
(३) तस्यास्त्वाहेति ख० ङ० पुस्तकान्तरञ्च।
(४) पृक्तिना गाधिसूनवे इति क० ग० घ० च०।
(५) गृहीत्वा बञ्जलास्वेतः इति ख० ङ० पुस्तकान्तरञ्च।
(६) तस्यैति क० घ०।
(७) तां ददुरिति ख० ङ० पुस्तकान्तरञ्च। आगत्येत्यत्र आहृत्येति क० ग० घ० च०।
(८) उपेति चास्यां कुशिकानिति क० घ०, उपेत्य वाचं कुशिकानिति ङ०।
(९) प्रतिष्ठात्मेति ख० ङ० पुस्तकान्तरञ्च।
(१०) अन्वचेतयदिति ङ० पुस्तकान्तरञ्च।
(११) इत्यनसाङ्गान्यनडुहमिति क० घ०। अनडुहमित्यत्र अनडुहः इति ङ०।

---

(क) ऋ० ४, १०, १०।

16

[१]अनसोऽङ्गानि चोत्थाप्य अनड्वाहौ गृहात्मजौ।
ततस्स्वशरीरञ्च गृहान् स स्वयमाप ह ॥१११॥
रथञ्च स्वशरीरेण गृहान् गच्छन् परादृदे।
पराश्वतस्रो यास्त्वत्र वसिष्ठद्वेषिणीर्विदुः[२] ॥११२॥
विश्वामित्रेण याः[३] प्रोक्ता अभिशापा इति स्मृताः।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्यास्वेवाभिचारिकाः[४] ॥११३॥
वसिष्ठास्ता[५]न शृण्वन्ति तदाचार्य्यकसम्मतम्।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते[६] ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां[७]स्तुष्टाव चतुर्भिरिममित्यृषिः।
अस्तौद्विश्वात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनस इत्यादिसार्द्धश्लोकः क० ग० घ० चिह्नितपुस्तकेषु नेच्यते। तेषु अस्मिन् स्थले, तन्वञ्च स्वां शरीरञ्च गृहानाच्छन् परीददे इति पाठोऽस्ति।

(२) वसिष्ठद्वेषिण्यः स्मृताः इति क० ख० ग० घ०।

(३) त्विति क० ख० ग० घ० च०।

(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु शब्द्यते। इति क० ग० घ० च०।

(५) त्विति ख० पुस्तकान्तरञ्च, ते इति ङ०।

(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते।

(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरञ्च।

[१]देवानामसुरत्वं तदेकं महदितीरयन्।
अश्विनौ मित्र ऋभवो[२] धेनुर्मित्र दुहेह वः॥११७॥
[३]वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु।
ऐन्द्रार्भवस्तृचस्त्वार्भवे सूक्तः स उत्तमः[४]॥११८॥
[५]पूर्वे द्वृचे निपातौन्द्र उषो वाजेन पञ्चमात्।
उषस्यादुत्तरे षड्भिः स्तुता ऋग्देवता तृचैः[६]॥११९॥
ऐन्द्रावरुणः प्रथमो वार्हस्पत्यस्ततः परः[७]।
पौष्णसावित्रसौम्यास्च मैत्रावरुण उत्तमः[८]॥१२०॥
तुष्टाव जमदग्निश्च[९] तेन देवा वृता वृधौ।
देवर्षिपितृपूजार्थं य अन्नाण्यपचच्छुनः[१०]॥१२१॥

---

(१) अस्तौदिश्वात्मना सर्व्वानित्यादि महदितीरयन्नित्यन्तपाठः क० ग० घ० चिह्नितपुस्तकेषु नोपलभ्यते।
(२) ऋतवः इति क० घ० च०।
(३) वैश्वदेवीति श्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(४) उत्तमे इति ख० ङ० पुस्तकान्तरञ्च।
(५) पूर्व्वे द्वृचे इति श्लोकार्द्धं क० ख० घ० चिह्नितपुस्तकेषु नेष्यते।
(६) औषसादुत्तरास्त्वन्ये षट् पृथग्देवतास्तृचाः इति क० ख० ग० घ० च०।
(७) तथापरः इति ग०। तदुत्तरः इति ङ०।
(८) षसामन्त्यस्तु यस्तृचः इति ङ० पुस्तकान्तरञ्च।
(९) जमदग्निस्तु इति ख० ङ० पुस्तकान्तरञ्च।
(१०) पपाचान्त्राण्यियच्छुन इति क० ग० घ० च०।

यस्य वै श्येनरूपेण अहर[१]द्वृत्रहा मधु।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोड़शभिः परैः ॥१२२॥
ऋषिस्त्वामिति तुष्टाव सूक्तैरेतैस्तु[२] गौतमः।
स भ्रातरमिति त्वासु[३] तिसृष्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिसंस्तौति चाङ्ग[४]रन्ये निपातितम्।
लिङ्गोक्तदेवते सूक्ते एके[५] प्रत्यग्निरेव तु[६] ॥१२४॥
ऋषिर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु[७]।
तस्यैव चायुरर्थाय[८] पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अञ्जसानुजनिष्येऽहं[९] ब्रुवाणं गर्भ एव[१०] तम्[११]।
अन्वगात्त्वदितिः[१२] पुत्त्रमिन्द्रमात्महितैषिणी ॥१२६॥

---

(१) यस्य च श्येनरूपेण चाहरदिति ख० ङ० पुस्तकान्तरञ्च।
(२) एति त्विति ग० घ०, एति चेति ङ० पुस्तकान्तरञ्च।
(३) त्वास्विति ङ०।
(४) अभिसंस्तौत्या प्राङ्गरिति क० ग० घ० च०।
(५) लिङ्गोक्तदैवतं सूक्तमेते इति क० घ०।
(६) लिङ्गोक्तैर्देवते सूक्ते एके प्रत्यग्निरित्युभे, इति ङ०।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च।
(८) चायुषोऽर्थायेति ख० ङ० पुस्तकान्तरञ्च।
(९) जनिष्यामेति क० ख० च०, जनिष्वाण इति ग०।
(१०) गर्भमेवेति क० ग० घ० च०।
(११) त्विति क० ख० ग० घ० च०।
(१२) अन्वग्रादर्दितिरिति ङ० पुस्तकान्तरञ्च।

स जातमात्रो युद्धाय ऋषिमेवाजुहाव तं[१] ।
योधयन्[२]वामदेवस्तं कृत्वात्मनि बलं तथा ॥१२७॥
दिनानि दश रात्रीश्च[३] विजिग्ये चैनमोजसा ।
स तङ्क दूम[४]मित्यस्यां विक्रीणन्नृषिसंसदि ॥१२८॥
स्मयन्नेवाभितुष्टाव[५] नकि[क]रिन्द्रेति[६] गौतमः ।
किमादुतासीति चास्यां[७] मन्युं मध्ये[८] पराणुदत् ॥१२९॥
अथास्य रूपवीर्य्याणि धैर्य्यकार्य्याणि तान्यृषिः[९] ।
विविधानि च कर्म्माणि प्रशंसादितये तथा ॥१३०॥

---

(१) स जातमात्रं युद्धायेति क० ख० ग० घ० च० ।
(२) योधयेदिति क० ख० घ० च० ।
(३) रात्र्यश्चेति क० ग० घ० च० ।
(४) सतङ्क इत्यमिति ग० ।
(५) स्वयं तेनाभितुष्टावेति ग०, स्वयमेवाभितुष्टावेति ङ० पुस्तकान्तरञ्च ।
(६) इन्द्रेणेति ङ० ।
(७) किमादुतासीदित्यस्यामिति ङ० पुस्तकान्तरञ्च ।
(८) मन्युमर्धे इति क० ग० घ० च०, मन्युमध्ये इति ख० ।
(९) धैर्य्यायान्याणि चारित्र्यिति क०, धैर्य्यायङ्गाणि चारित्र्यिति घ० च०, तान्टषिरिति ङ० ।

---

(क) ऋ० १, २७, ८ ।

अयमित्यथ वै सूक्ते[१] तृचे स्तुतिर्ऋतस्य हि[२]।
प्रसुषविभ्यो नवभिर्ऋग्भिः श्येनस्य[क] संस्तवः ॥१३१॥
पराभिस्त्वेति पञ्चर्चे सोमेनेन्द्रः स्तुतः[३] सह।
सोमप्रधाना[४]मेतान्तु क्रौष्टुकि[५]र्मन्यते स्तुतिं ॥१३२॥
दिवश्चिदिति चानेन तृचेनेन्द्रेण संस्तुतः[६]।
उषसं मध्यमां मेने त्वाचार्य्यः[७] शाकटायनः ॥१३३॥
वाममित्यृक्स्तुतास्त्वत्र[८] भगः पूषेति चार्य्यमा।
करूलती[ख]ति पूषोक्तोऽदन्तकः स इति श्रुतेः ॥१३४॥
अस्माकमुत्तमं सूर्य्यं स्तौतीत्याहाश्वलायनः[९]।

---

(१) अहमित्यात्मसंस्तवः इति ख० ङ०, अहमित्यात्वसंस्तावः इति ग०।
(२) तृचे स्तुतिविसस्य हीति ख०, तृचे स्तुतिरिवास्य हीति ङ० पुस्तकान्तरेच्च।
(३) पराभिस्त्वेव पञ्चर्षे सोमेन्द्रः संस्तुतः इति क० घ०, सोमेन्द्रौ च स्तुतः इति ग०।
(४) सोमप्रधानमिति क० ख० ग० घ० च०।
(५) क्रोष्टुकः इति क० घ० च०।
(६) चैतेन ते तृचे नेन्द्रसंस्तुतेति क० घ० च०, इन्द्रसंस्तुतामिति ग०।
(७) मेन आचार्य्यः इति ख० ङ० पुस्तकान्तरेच्च।
(८) वाममित्यृचि संस्तुतेति ख० ङ० पुस्तकान्तरेच्च।
(९) करूलतीत्यादि स्तौतीत्याहाश्वलायनः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

---

(क) ऋ० १, ११८, ११। (ख) ऋ० ४, ३२, २३।

इन्द्रस्य हरयो ह्यश्वा अग्नेरश्वस्तु[१] रोहितः ॥१ ३ ५॥
सूर्य्यस्य हरितश्चैव[२] वायोर्नियुत एव च।
रासभा रोहितो[३]ऽश्विभ्यामजाः[४]पूष्णश्च[५]वाजिनः॥१ ३ ६॥
पृषतो[६]ऽश्वास्तु मरुतां गावोऽरुण्यस्तथोषसः[७]।
सवितुर्वाजिनः श्यावा[८] विश्वरूपा बृहस्पतेः ॥१ ३ ७॥
सहैते देवताभिस्तु[९] स्तूयन्ते स्वल्पशो[१०]ऽन्यथा।
आयुधं वाहनं चापि स्तुतौ यस्येह दृश्यते ॥१ ३ ८॥
तस्यैव तु स्तुतं विद्यात्तस्यात्मा बहुधा हि सः।
कनीनका[क]सूक्तशेषो हर्य्योः स्तुति[११]रिहोच्यते।
चत्वार्य्यतस्य विज्ञेयान्यप्रगृह्याणि[१२] विद्रधेः[ख] ॥१ ३ ९॥

इति बृहद्देवतायां चतुर्थोऽध्यायः।

---

(१) अश्वास्त्विति क० ख० घ० ङ० च०।
(२) प्रोक्ता इति ख० ङ० पुस्तकान्तरञ्च।
(३) रासभो मोहितः इति ख०ङ०पुस्तकान्तरञ्च, रासभौ सहितः इति ग०।
(४) माजाः इति क० घ० च०।
(५) पूष्णस्त्विति ख० ङ० पुस्तकान्तरञ्च।
(६) पृषत्यः इति ङ० पुस्तकान्तरञ्च।
(७) तथोषसामिति ख० ङ० पुस्तकान्तरञ्च।
(८) श्यामा इति क० घ० च०।
(९) चेति ख० ङ० पुस्तकान्तरञ्च।
(१०) स्तूयन्तेऽप्यतेऽन्यथेति क० घ० च०, स्तूयन्तेऽप्यल्पशोऽन्यथेति ग०।
(११) धर्धसन्तुतिरिति क० घ० च०, सूक्तशेषोऽध्यर्धशस्तुतिरिति ग०।
(१२) चत्वारि परमाग्नेयान्याप्रगृह्याणीति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ७, २। (ख) ऋ० ४, ३२, २३।

# अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्भवं त्रीणि[१] दधिक्राणि पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिक्राव्णां[क]मुखे तु या[२] ॥१॥
परोच्चैरमुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा[३] ॥२॥
नियुक्ता सूर्य्यदेवत्या हंस इत्यैतरेयके[४] ।
द्वे लैन्द्रावरुणे सूक्ते[५] तत्र[६] त्रीण्याश्विनाग्निकः[७] ।
अग्रं वायो विही[ग] त्वेषु [८]वायव्याः सप्त कीर्त्तिताः ॥३॥

---

(१) पञ्चार्भवाणीति ङ० ।

(२) दधिक्राव्नां स्तुतौ हि वामिति ख०, दधिक्राणां मुखे तु येति ग०, दधिक्राणामुतो (ख) हि वामिति ङ० ।

(३) इत्यृचीति क० ग० घ० च० ।

(४) स्रोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ० ।

(६) ततः इति ग० ङ० पुस्तकान्तरञ्च ।

(७) आश्विनानिकः इति क० ख० ग० घ० च० ।

(८) विही मां त्वा इति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, ३९, २ । (ख) ऋ० १, २३, १५ ।

(ग) ऋ० ४, ४८, १ ।

नव चैवेन्द्रवायव्या ऐन्द्रा[१]स्तिस्रः शतेन षट्[२]।
इदं कथितदेवत्यं यस्तु स्तम्भोत्तमो द्व्यचः[३] ॥४॥
स्तुतिरिन्द्राबृहस्पत्योरष्टावेता ऋचः स्मृताः।
बार्हस्पत्यन्तु तत्सूक्तमिदमित्यौषसे परे।
पुरो धातुः कर्मशंसा स इन्द्राजोच्यते[४] तृचे[५] ॥५॥
तत्साविन्त्री द्वे तु कौ वैश्वदेवं[६]
मही द्यावा पृथिवीयं तत्परञ्च[७]।
क्षेत्रस्येति तिस्रः क्षेत्रपत्याः[८]
शुनं[क] वाहाः शुनदेवी तृगुत्तमा[९] ॥६॥

---

(१) इन्द्रः इति क० ग० घ० च०।

(२) शतेन षदिति ङ०।

(३) इदमित्यौषसे परे इति क० घ० च०, यस्तं स्तम्भोतिमो द्यचः इति ग०।

(४) स इन्द्राजोच्यते इति पुस्तकान्तरम्।

(५) स्तुतिरिन्द्राबृहस्पत्योरिति श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(६) तत्साविन्नेकौ वैश्वदेवमिति ङ०।

(७) परन्तु यदिति क० ग० घ० च०।

(८) क्षेत्रस्य क्षेत्रपत्यन्नस्तृचस्त्विति क० घ०, क्षेत्रस्येति क्षेत्रपत्यस्तृचस्त्विति ग०।

(९) शुनदेवत्यृगुत्तरेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ११७, ५८।

वरुणार्य्यममित्राणां प्रगाथोऽय[१]मिति स्तुतिः[२] ॥५०॥
आग्नेये स्तुती राजर्षेस्त्रसदस्योरदा[क]दिति।
पञ्चाशतं वधूनाञ्च गवां तिस्रश्च सप्ततीः ॥५१॥
अश्वोष्ट्राणामुरभ्राणां वासांसि विविधानि च।
रत्नानि वृषभं शावं तासामग्रेसरं पतिम्[३] ॥५२॥
कृत्वा दारानृषिर्गच्छन्निन्द्रायैतच्छशंस ह।
वयं[ख] सूक्तेन शक्रश्च प्रीतस्तेन शचीपतिः ॥५३॥
ऋषे वरं वृणीष्वेति शक्रस्तमृषिरब्रवीत्।
काकुत्स्थ कन्याः पञ्चाशद्युगपद्रमये प्रभो ॥५४॥
कामतो बहुरूपत्वं यौवनं[४] चाक्षयां रतिं।
शङ्खनिधिं पद्मनिधिं मद्गृहेष्वनपायिनम्[५] ॥५५॥
प्रासादान् विश्वकर्म्मासौ सौवर्णांस्त्वत्प्रसादतः।
करोतु पुष्पवाटीश्च पृथक्तासां सुरद्रुमैः ॥५६॥
मा भूत् सपत्नी स्पर्द्धायां सर्व्वमस्त्विति चाब्रवीत्[६]।

---

(१) वरुणार्य्यममित्रास्तु प्रगाथेयमिति ख० ङ०।
(२) स्तुताः इति ख० ङ० पुस्तकान्तरञ्च, तदेति ग०।
(३) अग्ने शरं प्रतीति ख०।
(४) युगपदिति ङ०।
(५) काकुत्स्थेत्यादिसार्द्धश्लोकः पुस्तकान्तरे न दृश्यते।
(६) पञ्चाशतं वधूनाञ्चेत्यादि सर्व्वमस्त्विति चाब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० ८, १९, ३६। (ख) ऋ० ८, २१, १।

आगन्त[क] मारुतं सूक्तं वय[ख]मित्यैन्द्रमुत्तरम्[१] ॥५७॥
काण्वस्य सौभरे[२]श्चैव यजतो वंशजैः[३] सह।
कुरुक्षेत्रे यवान् जहुर्हवींषि विविधानि च ॥५८॥
आखुश्च[४] सोऽभितुष्टाव इन्द्रश्चित्रं सरस्वतीं।
इन्द्रो वे[ग]त्यनयर्चा स दानशक्तिं प्रकाशयन् ॥५९॥
आखुराजोऽभिमानाच्च प्रहर्षितमनाः स्वयम्[५]।
स स्तुतो[६] देववच्चित्र[घ] ऋषये तु गवां ददौ[७] ॥६०॥
अयुतानां सहस्रं वै निर्जग्राह स्तुवन्नृषिः।
ऋषिश्चोवाच[८] हृष्टात्मा नाहमर्हाम्यृषेः स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो[९] देवतां[१०] स्तोतुमर्हसि।

---

(१) वयमैन्द्रमतः परमिति ख० ङ० पुस्तकान्तरञ्च।
(२) सौभरेरिति क० ग० घ० च०।
(३) वङ्गजैरिति क० घ० च०।
(४) आखवः इति ख० ङ० पुस्तकान्तरञ्च।
(५) इन्द्रोवेत्यनयर्चा स इति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नालोक्यते।
(६) संस्तुत इति ख० ग० ङ० पुस्तकान्तरञ्च।
(७) यद्ददौ तद्दृचेन हेति ङ० पुस्तकान्तरञ्च।
(८) प्रोवाचेति ङ०।
(९) समुद्भूत इति ख० ङ० पुस्तकान्तरञ्च।
(१०) देवं नः इति ग०।

---

(क) ऋ० ८, २०, १। (ख) ऋ० ८, २१, ४। (ग) ऋ० ८, २१, १७। (घ) ऋ० ८, २१, १८।

तमन्वयया पुनश्चास्तौदोत्यं[क] सूक्तेन चाश्विनौ[१] ॥६२॥
इळि[ख]ष्वेत्येतदाग्नेयं सखायश्चैन्द्रमुत्तरम्[२]।
यथा वरः सुसाम्ने [ग]उत्तमस्तौषसस्तृचः ॥६३॥
अष्टौ तु संहिता एता देवता विभिदुर्बलम्।
उषाश्चेन्द्रश्च सोमश्चाथाग्निः सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता वा[घ]मित्युत्तरस्य तु।
आदौ मैत्रावरुण्यस्तु[३] नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो वरुराजा यच्चादादृषये वसु।
इन्द्रो वेत्येतयर्चा तु दानशक्तिप्रकाशनम्[४] ॥६६॥
कीर्त्तितं[५] तु तृचे तस्मिन्नृक्ष[ङ]सुचण्णायने।
अश्विनौ ददतुः प्रीतौ तदिहोक्तं सुसामनि[६][च] ॥६७॥

---

(१) स्तुत्वा चित्रं सूक्तैः षड्भिस्त्रिभिरिति क० घ० च०।
(२) उत्तममिति ङ० एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न पठितम्। तेषु अस्मिन् स्थले, अश्विनावग्निमिन्द्रञ्च चाभितुष्टाव देवताः। एतच्छ्लोकार्द्धं वर्त्तते।
(३) मित्रावरुण्य इति ख० ङ०।
(४) एतच्छ्लोकार्द्धं ख० ग० ङ० चिह्नितपुस्तकेषु नापठ्यत।
(५) कीर्त्तनमिति ङ० पुस्तकान्तरञ्च।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।

---

(क) ऋ० ८, २२, १। (ख) ऋ० ८, २३, १। (ग) ऋ० ८, २४, २८। (घ) ऋ० ८, २५, १। (ङ) ८, २५, २२। (च) ऋ० ८, २५, २२।

आश्विनं तु युवो[क] युंच्व[ख] वायव्या उत्तरास्तु याः ।
यं सवर्णमनुर्नाम लेभे पुत्त्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्थे[ग] जगाद सः[१] ।
बभ्रुरेक[घ] इति त्वस्मिँल्लिङ्गतो[२] द्विपदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्म्मभिः[३] स्वैः पृथक् पृथक् ।
स्तुताः कर्म्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवन्तदेव तु[४] ।
तासाम्बभ्रुरिति त्वाद्या सौम्याग्नेयी त्वृगुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्यृगाश्विनी ।
नवमी मैत्रावरुण्यृग्दशमी मित्रसंस्तवा ॥७२॥
यजमानप्रसङ्गाच्च यजिरेवात्र संस्तुता ।
यो यजाति[ङ] इत्युचे शक्रो यजतां पतिरीलितः ॥७३॥
तस्य द्युमान्[च] इत्युचे यज्वा चतसृष्वपि मन्वि[छ]ति ।

---

(१) वैश्वदेवानि सूक्तानि जगादाग्निरिति स्वयमिति क० घ० च० ।
(२) त्वेता लिङ्गतः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) ह्यासां नवभिरिति क० घ० च० ।
(४) पृथक् कर्म्मस्तुतेत्युक्तं तद्विद्याद्वैश्वदेवतमिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ८, २६, १ । (ख) ऋ० ८, २६, २० । (ग) ऋ० ८, २७, १ । (घ) ऋ० ८, २९, १ । (ङ) ऋ० ८, ३१, १ । (च) ऋ० ८, ३१, ३ । (छ) ऋ० ८, ३१, १५ ।

यज्वनोरेव दम्पत्योः पञ्च या[क] दम्पतीत्यृचः ॥७४॥
आग्नम्नी[ख]ग्नीरेतु[ग] पौष्णौ परे मित्रार्य्यमा यथा[घ] ।
वरुणश्च स्तुतस्त्वत्र आदित्या अग्नि[ङ]मग्नये[१] ॥७५॥
सूक्तानि प्रकृतानी[च]ति त्रीण्यैन्द्राणि पराण्यतः ।
अध[छ] इत्यत्र कन्या तं स्त्रीलिङ्गेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः ।
ज्येष्ठां स्वसारं पुंसस्य[२] तस्यैव वधकाम्यया[३] ॥७७॥
अग्निने[ज]त्याश्विनं सूक्तमैन्द्रे सूक्ते परे ततः ।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्याद्वारुणे[४] परे ॥७८॥
उत्तरे वरुणे त्वन्त्य आ वा[झ]मित्याश्विनस्तृचः ।
सूक्ते इमे[ञ] समाग्नेये[५] ताभ्यामैन्द्रे ततः परे[६] ॥७९॥

---

(१) यो यजाति इति प्राक् इत्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नित-पुस्तकेषु नोपलभ्यते ।

(२) प्युसस्येति क० घ० च०, व्यंसस्येति ख० पुस्तकान्तरञ्च ।

(३) युवकाम्ययेति ख० ग० ङ० पुस्तकान्तरञ्च ।

(४) ऐन्द्राग्नं परमाग्नेयमैन्द्राग्नं वारुणे इति क० घ० च० । वारुणे इत्यत्र वारुणमिति ग० ।

(५) इमे तु चाग्नेये इति क० घ० च० ।

(६) ताभ्य मैन्द्रेति चोत्तरे इति क० ग० घ० च० ।

---

(क) ऋ० ८, ३१, ५ । (ख) ऋ० ८, ३१, १० । (ग) ऋ० ८, ३१, ११ । (घ) ऋ० ८, ३१, १३ । (ङ) ऋ० ८, ३१, १४ । (च) ऋ० ८, ३२, १ । (छ) ऋ० ८, ३३, १९ । (ज) ऋ० ८, ३५, १ । (झ) ऋ० ८, ४२, ४ । (ञ) ऋ० ८, ४३, १ ।

वशायाख्याय[१]यत्[२]प्रादात्कानीनस्तु पृथुश्रवाः ।
तदत्र संस्तुतं दानमास[क] इत्येवमादिभिः[३] ॥८०॥
आनः[ख] प्रगाथो वायव्यः सूक्तस्योपोत्तमा च या ।
मित्रार्य्यमाणौ मरुतः सुनीथोघ[ग]दृचे स्तुताः ॥८१॥
द्विचत्वारिंशकात्प्रीत[४] स्त्रिशोकाय पुरन्दरः ।
गिरिं निकृत्य वज्रेण गा ददावसुरैर्हृताः ॥८२॥
यः[घ] कृन्तदिति चैतस्यामृषिस्तु स्वयमब्रवीत्[५] ।
स्तुता नवम्या त्वदितिर्महो[ङ]त्यादित्यदेवते[६] ॥८३॥
अन्त्याः पञ्चोषसेऽपि स्युः सौम्यं स्वादो[च]रिति स्मृतम् ।
पराण्यष्टौ तु[७] सूक्तानि ऋषीणां तिग्मतेजसाम् ॥८४॥

---

(१) वशापाख्यायेति घ० ।

(२) वशाश्वाय यपदिति ङ० ।

(३) थादिनेति ख० ङ० पुस्तकान्तरञ्च ।

(४) प्रातः इति ङ० पुस्तकान्तरञ्च ।

(५) मित्रार्य्यमाणौ मरुतः इत्यादि ऋषिस्तु स्वयमब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

(६) चापीति क० घ० च० ।

(७) पराणि चाष्टाविति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ८, ४६, २१ । (ख) ऋ० ८, ४६, २५ । (ग) ऋ० ८, ४६, ४ । (घ) ऋ० ८, ४६, २७ । (ङ) ऋ० ८, ४७, १ । (च) ऋ० ८, ४८, १ ।

ऐन्द्राण्यभि[क] तु षड्विंशः प्रगाथो बहुदेवतः।
स्तुगन्त्याग्नेरचेत्य[ख]ग्निः सूर्य्यमन्त्यपदा[१] जगौ[२] ॥८५॥
प्रस्कण्वस्य पृषध्रस्य[३] प्रादाद्यद्वसु किञ्चन।
तद्भूरी[ग]दिति सूक्ताभ्यामखिलन्त्विह संस्तुतम्[४] ॥८६॥
ऐन्द्राण्युभय[घ]मित्यत्र षडाग्नेयात् पराणि तु[५]।
निपातमाह[६] देवानां दाता म[ङ] इति भागुरिः ॥८७॥
तृचे[७]यास्कस्तृचन्त्वेतं[८] मन्यते वैश्वदेवतं।
आदित्यदैवतं सूक्तं त्याग्न्वि[च]त्यत्र परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले।

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरञ्च।
(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते। तेषु अस्मिन् स्थले, अन्वेत्यग्निरिति त्वस्यास्ततोऽग्निः सूर्य्य एव तु। इति श्लोकार्द्धमस्ति।
(३) त्विति ङ०।
(४) परिकीर्त्तितमिति ख० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(६) निपातानाहेति ख०, निपातेनेहेति ङ० पुस्तकान्तरञ्च।
(७) ऋचमिति ग०।
(८) यास्कोऽस्मेऽर्द्धं तृचं चैनमिति ङ०।

(क) ऋ० ८, ४९, १। (ख) ऋ० ८, ५६, ५। (ग) ऋ० ८, ५५, १। (घ) ऋ० ८, ६१, १। (ङ) ऋ० ८, ६५, १०। (च) ऋ० ८, ६७, १।

जालं प्रक्षिप्य तान् बद्धोदक्षिपन् सलिलात् स्थलम् ॥८९॥
शरीरपातभीतास्ते तुष्टुवुश्चादितेः सुतान् ।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवराः क्षुद्भयं मा वो भूत्स्वर्गं प्राप्स्यथेति च[१] ।
उते[क]ति माता चैवैषां वचेनाभिष्टुतादितिः ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्[२] स्तूयेतैषां[३] स्तुतौ स्तुतौ ।
ऐन्द्राण्या त्वा रथं[ख] त्रीणि स्तौत्यृक्त्वनुपमे[ग]ति षट् ॥९२॥
आर्क्षाश्वमेधयोरत्र पञ्चदानस्तुतिः परा ।
अपा[घ]दिन्द्रस्य चाग्नेश्च विश्वेषां चैव संस्तवः ॥९३॥
तृचस्य प्रथमोऽर्द्धर्चः शेषा वरुणदेवताः[४] ।
त्व[ङ]माग्नेयेऽथ वा सूक्ते उत्तरे[५] हविषां स्तुतिः॥९४॥
पयःपश्वोषधीनाञ्च[६] तथा रूपं हि दृश्यते ।

---

(१) धीवराः सहसा मीनानित्यादि सार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नितपुस्तकेषु नापद्यत ।

(२) मातृत्वादतिसम्बन्धादिति क० च०, मातृत्वादभिसम्बन्धादिति ग० मातृत्वादिति सम्बन्धादिति घ० ।

(३) सुवन्त्येनामिति ख० ङ० पुस्तकान्तरश्च ।

(४) शेषो वरुणदैवतः इति ख० ग० ङ० ।

(५) सूक्तमुत्तरमिति क० ग० घ० च० ।

(६) वेति ख० ङ० ।

---

(क) ऋ० ८, ६७, १० । (ख) ऋ० ८, ६८, १ । (ग) ऋ० ८, ६८, १४ । (घ) ऋ० ८, ६९, ११ । (ङ) ऋ० ८, ७१, १ ।

उ[क]दित्याश्विनमाग्नेये परे सूक्ते विप्रो विप्रः[ख] ॥९५॥
ऋग्भ्यामह[ग]मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम्।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्व्वणः ॥९६॥
आत्मादानाभिसम्बन्धात् परुष्णीञ्च महानदीम्[१]।
परुष्णीं परया चेन्द्रं[२] त्रिभिः सूक्तैरिम[घ]न्विति ॥९७॥
सौम्यस्य त्वय[ङ]मित्यस्य पराण्यैन्द्राणि यानि तु।
नह्यी[च]ति तेषां प्रथमे[३] वैश्वदेव्यृगवीवृधत्[छ] ॥९८॥
देवाना[ज]मिति देवानाम्प्रेष्ठ[झ]माग्नेयमुत्तरम्[४]।
त्रीण्याश्विनानि सूक्तानि आ मे[ञ]ऐन्द्राणि तं[ट] तथा[५] ॥९९॥
अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा।
तामिन्द्रस्चकमे दृष्ट्वा[६] विजने पितुराश्रमे ॥१००॥

---

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।
(२) परया परुष्णीमिन्द्रमिति क० ग० घ० च०।
(३) प्रथममिति ङ० पुस्तकान्तरञ्च।
(४) आग्नेयन्तु ततः परमिति क० घ० च०।
(५) आम इति ऐन्द्राग्नि तमितीति चेति क० ग० घ० च०।
(६) दृष्ट्वेति क० घ० च०।

---

(क) ऋ० ८, ७३, १। (ख) ऋ० ८, ७४, १। (ग) ऋ० ८, ७४, १३। (घ) ऋ० ८, ७६, १। (ङ) ऋ० ८, ७९, १। (च) ऋ० ८, ८०, १। (छ) ऋ० ८, ८०, १०। (ज) ऋ० ८, ८३, १। (झ) ऋ० ८, ८४, १। (ञ) ऋ० ८, ८५, १। (ट) ऋ० ८, ८८, १।

तपसा बुबुधे सा तु सर्व्वमिन्द्रचिकीर्षितम् ।
उदकुम्भं समादाय अपामर्थं जगाम सा[१] ॥१०१॥
दृष्ट्वा सोममपादास्ये तुष्टावर्चा वने तु तं ।
कन्या वा[क]रिति चैतस्यामेषोऽर्थः कथितः स्तुतः[२] ॥१०२॥
सा सुषाव मुखात् सोमं स्तुत्वेन्द्रञ्चाजुहाव तं[३] ।
असौ य एषी[ख]त्यनया पपाविन्द्रस्तु तन्मुखात्[४] ॥१०३॥
अपूपांश्चैव सक्तूंश्च भक्षयित्वा तु तद्गृहात्[५] ।
ऋग्भिस्तुष्टाव सा चैनं जगादैनं तृचेन तु[६] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां ।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः[७] ॥१०५॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च ।

---

(१) क० ग० घ० च० चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपांश्चैव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम् ।
(२) दृष्ट्वासोममपादास्ये इत्यादि एषोऽर्थः कथितः स्तुतः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तके नोपलभ्यते ।
(३) पपाविन्द्रस्तु तन्मुखादिति क० ग० घ० च० ।
(४) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) शतक्रतुरिति ख० ङ० पुस्तकान्तरञ्च ।
(६) असौ ब्रूते दृचेन सेति ङ० पुस्तकान्तरञ्च ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० ८, ९१, १ । (ख) ऋ० ८, ९१, २ ।

प्रक्षिप्य निश्चकर्ष त्वचः सुत्वक् सा तु ततोऽभवत्[(१)] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्व्वस्यां श्लक्ष्णको[(२)]ऽभवत्।
उत्तरा त्वभवद्गोधा श्लक्ष्णत्वास्त्वगुत्तमा ॥१०७॥
इतिहासमिमं[(३)] सूक्तं त्वाहतुर्यास्कमाठरौ[(४)]।
कन्ये[(क)]ति शौनकः सूक्ते पान्त[(ख)]मैन्द्रे ततः परे[(५)] ॥१०८॥
उत्तमा चार्भवी प्रोक्ता उत्तरस्यैतरेयके।
छान्दोगिके तृतीये तदार्भवं शस्यते यतः[(६)] ॥१०९॥
मारुतं गौः[(ग)] परं सूक्तमा त्वै[(घ)]न्द्राणि[(७)] पराणि षट्।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[(८)] ॥११०॥

---

(१) ततः सा सुत्वचाभवदिति ङ० पुस्तकान्तरञ्च।
(२) तस्यास्त्वगपहृतायाः पूर्व्वा सा श्लक्ष्णकः इति क० ग० घ० च०।
(३) इदमिति क० ग० घ० च०।
(४) यास्कभागुरिरिति क० ग० घ० च० यास्कगालवाविति ङ० पुस्तकान्तरञ्च।
(५) शौनकस्त्वैन्द्रं यान्तमित्युत्तरे च ये इति क०।
(६) उत्तमा चार्भवीत्यादिश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापठ्यत।
(७) त्वात्वैन्द्राणीति क० ग० घ० च०।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० ८, ९१, १। (ख) ऋ० ८, ९२, १। (ग) ऋ० ८, ९४, १। (घ) ऋ० ८, ९५, १।

अपक्रम्य तु[१] देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीनाम्नीमध्यतिष्ठत् कुरून्[२] प्रति ॥१११॥
तं वृहस्पतिरेकेन अभ्यपा[३]द्वृत्रहा सह।
योत्स्यमानः सुसंहृष्टै[४]र्मरुद्भिर्विविधायुधैः ॥११२॥
दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः।
मन्वानो वृत्रमायान्तं[५] जिघांसुमरिसेनया ॥११३॥
व्यवस्थितं धनुष्मन्तं तमुवाच वृहस्पतिः।
मरुत्पतिरयं सोम एहि[६] देवान्[७] पुनर्विभो ॥११४॥
श्रुत्वा देवगुरोर्वाक्यमनर्थं वृत्रशङ्कया[८]।
सोऽब्रवीन्नेति तं शक्र ओजस्येव[९] बलाद्बली ॥११५॥

---

(१) अपचक्रामेति ख० ङ० पुस्तकान्तरञ्च।
(२) अंशुमती नामा अत्यतिष्ठद्गुरूनिति क० ग० घ० च०, अभ्यतिष्ठत् कुरूनिति ख० ङ०।
(३) अभ्ययादिति पाठः साधुः। दृचान्वयादिति ङ० पुस्तकान्तरञ्च।
(४) योत्स्यमानस्य संहृष्टैरिति क० घ० च०।
(५) दृष्ट्वा तानायतांस्सोमं स्वबलेन व्यवस्थितम्। मन्वानं पुत्त्रमायान्तमिति क० घ० च०।
(६) मरुत्पतिरयं सोममैहीति क० ग० घ० च०।
(७) देवेति पाठः समीचीनः।
(८) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) स्वर्ग एवेति क० घ० च०।

दूयाय देवानायन्तं[१] तं पपुर्विधिवत्सुराः ।
जघ्नुः पीत्वा च दैत्यानां समरे[२] नवतीर्नव ॥११६॥
तदेतदप्यवद्रप्स[३][क]स्तृचे सर्वं निगद्यते ।
तृचस्य देवतां तस्य[४] इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्राबार्हस्पत्य उक्ता ब्राह्मणे त्वैतरेयके[५] ।
तृचेनेन्द्रमपश्यन् तं [६]नेमोऽय[ख]मिति भार्गवः ॥११८॥
तुष्टावेन्द्रो दृचेनाय[ग]मह्वं पश्य च मामृषे ।
स हि स्तुवन्नेव एको नेन्द्रा[७] अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्[८] ।

(१) आदायेति क० ग० घ० च० ।
(२) इतरा इति क० घ० च० ।
(३) तदेतदपि यतस्मिन्निति क० ग० च० ।
(४) देवता ह्येता इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(६) अदृश्यन्तमिति क० घ० च०,ऐन्द्रमपश्यन् तमिति ङ० पुस्तकान्तरञ्च ।
(७) इन्द्रः इति पाठः साधुः ।
(८) स हि स्तुवन्नेव एक इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।

(क) ऋ० ८, ९६, १३ । (ख) ऋ० ८, १००, ३ । (ग) ऋ० ८, १००, ४ ।

ऋषिस्तु दृष्ट्वा[1] सुप्रीतो विश्वेत्तात[क]इति तृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रञ्च शंसति।
मनोजवा[ख]स्तु सौपर्णी[2] समुद्रे[ग] वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं[घ] स्तौति यद्वा[ङ]गिति तृचे।
त्रींल्लोकानभितष्येमान्[3] वृत्रस्तस्थौ स्वयं त्विषा ॥१२२॥
तं नाशकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत्।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[4] ममान्तिके ॥१२३॥
उद्यतस्य तु[5] वज्रस्य द्यौर्ददातु[6] ममान्तरम्।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णविति सखे[च]त्यृचि[7]।

---

(१) तं दृष्ट्वर्षिस्त्वेति ख० ङ० पुस्तकान्तरञ्च।
(२) सौवर्णीति ख० ङ०।
(३) अभितष्येमानिति ख० ङ० पुस्तकान्तरञ्च।
(४) वृत्रं हनावविक्रम्य तिष्ठस्वाद्येति ख० ङ० पुस्तकान्तरञ्च।
(५) उद्यतस्त्वेवेति क० घ० च०।
(६) ददात्विति क० घ० च०।
(७) सर्व्वमृषिणोक्तं सखेत्यृचीति क० ग० घ० च०।

---

(क) ऋ० ८, १००, ६। (ख) ऋ० ८, १००, ८। (ग) ऋ० ८, १००, ९। (घ) ऋ० ८, १००, ११। (ङ) ऋ ८, १००, १०। (च) ऋ० ८, १००, १२।

मैत्रावरुण्यः सूक्ताद्यास्तिस्रस्तृध[क]गित्यृचः ॥१२५॥
प्रे[ख]ति मित्राय वा पादास्त्वार्य्यम्णो[१] वरुणस्य च ।
नय[ग]स्तुर्यः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या[२] आम[घ] इत्याश्विनो द्वृचः[३] ।
वायव्ये चोत्तरे सौर्य्ये औषसी तृगियं[ङ] परा[४] ॥१२७॥
पावमानी प्रजा ह्ये[च]ति माते[छ]त्यृग्भ्यान्तु गौः स्तुता ।
त्वमग्ने बृह[ज]दाग्नेये परेऽग्निस्तृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रैश्च आग्ने याही[झ]ति मध्यमः ।
प्रजा ह्ये[ञ]त्यपि वार्द्धर्चे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः ।

(१) मित्राय पादस्य त्वर्य्यम्णः इति क० ख० ग० घ० ।
(२) ऋच आदित्यदेवत्या इति ङ० पुस्तकान्तरञ्च ।
(३) द्व्यृचः इति ग० ।
(४) सौर्य्य औषस्या प्रभां वा चन्द्रसूर्य्ययोरिति ख० ङ० पुस्तकान्तरञ्च । औषस्या इत्यत्र उषसेति ग० ।

(क) ऋ० ८, १०१, १। (ख) ऋ० ८, १०१, ५। (ग) ऋ० ८, १०१, ४। (घ) ऋ० ८, १०१, ७। (ङ) ऋ० ८, १०१, १३। (च) ऋ० ८, १०१, १४। (छ) ऋ० ८, १०१, १५। (ज) ऋ० ८, १०२, १। (झ) ऋ० ८, १०२, १४। (ञ) ऋ० ८, १०२, १४।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[१] ॥१३०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[२]।
पवमानवदाप्र्यस्तु[३] समिद्ध [क]इति संस्तुतः ॥१३१॥
अग्न आयूंषी[ख]ति चास्य तिसृष्वग्निर्निपातभाक्।
अविता न[ग] इति त्वस्मिंस्तृचे पूष्णा[४] सह स्तुतः ॥१३२॥
आग्नेय्यौ द्वे ऋचावत्र यत्त [घ]इत्युत्तरे ततः।
उभाभ्या[ङ]मिति सावित्री अग्निसावित्र्य[५]गुत्तरा ॥१३३॥
पुनन्तु मां[च] वैश्वदेवी आग्नेयी त्वगुपप्रियम्[छ]।
षडुत्तरा[६] य[ज] इत्यत्र[७] स्वाध्यायाध्येतृसंस्तवः ॥१३४॥

---

(१) प्रजा ह्येत्यपि वार्द्धर्चे इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते।
(२) नवमे मण्डलेऽर्षिभिरिति क० घ० च०, मण्डलर्षिभिरिति ग०।
(३) पवमानवदाप्रीयः इति ख०।
(४) पूषेति ख० ङ० पुस्तकान्तरञ्च।
(५) आग्न्यासावितीति ख०।
(६) सप्तोत्तराः इति ख० ङ० पुस्तकान्तरञ्च।
(७) उत्तरे च य इत्येतीति ग०।

---

(क) ऋ० ९, ५, १। (ख) ऋ० ९, ६६, १९। (ग) ऋ० ९, ६७, २०। (घ) ऋ० ९, ६७, २३। (ङ) ऋ० ९, ६७, २५। (च) ऋ० ९, ६७, २७। (छ) ऋ० ९, ६७, २९। (ज) ऋ० ९, ६७, ३१।

सूक्ते निरुक्ते सूक्ते[क]ऽग्नि रक्षोहा घर्म्मसंस्तवः[१]।
सूर्य्यवर्चात्मवर्चाच्च[२] पवित्र[ख]मिति चोच्यते ॥१३५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर[ग] इति स्मृतः।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[३] ॥१३६॥
ब्रह्मा देवानां तिस्रोक्तास्त्रिभिस्त्वेतैर्तृचैर्ऋचैः[४]।
सूर्य्यवर्चात्मवर्चायं[५] स्तूयते सोम[घ] इत्यपि[६] ॥१३७॥
अनावृष्ट्यां तु वर्त्तन्त्यां पप्रच्छर्षीञ्छचीपतिः।
काले दुर्गे महत्यस्मिन् कर्म्मणा केन जीवथ ॥१३८॥
शकटं शाकिनी गावः कृषिरस्यन्दनं वनं[७]।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१३९॥
अथ स्तुवन्[८] प्रशंसास्य ह्यृषिराङ्गिरसः शिशुः।

---

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम्।
(२) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(४) तृचादृचैरिति क० ग० घ० च०।
(५) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(६) एव वेति क० ग० घ० च०।
(७) ऋटरस्य नन्दनन्दनमिति ख०। एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत।
(८) स्तुवन्नेवेति क० ग० घ० च०।

---

(क) ऋ० ९, ७३, १। (ख) ऋ० ९, ८३, १। (ग) ऋ० ९, ८७, ३। (घ) ऋ० ९, १०७, ७।

नानानीयेन[क] सूक्तेन ह्यृषीणामेव[१] सन्निधौ ॥ १ ४ ० ॥

तानिन्द्रः प्राब्रवीत् सर्व्वां[२]स्तपध्वं सुमहत्तपः ।

नातप्ततपसः शक्यमिदं[३] कृत्स्नं व्यपोहितुं ॥ १ ४ १ ॥

अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः ।

ततस्ते तपसोग्रेण पावमानीर्ऋचोऽब्रुवन् ॥ १ ४ २ ॥

अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः ।

दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥ १ ४ ३ ॥

पापं यच्चा[४]करोत्किञ्चिन्मनोवाग्देहभोजनैः[५] ।

पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते[६] ॥ १ ४ ४ ॥

पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं[७] ।

गायत्र्योऽन्तेऽच यस्यासां प्राणानायम्य तन्मनाः[८] ॥ १ ४ ५ ॥

पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम् ।

---

(१) इवेति ख० ङ० पुस्तकान्तरञ्च ।

(२) त्वाह सर्व्वांस्त्विति क० ग० घ० च० ।

(३) न ह्येतत्तपसा शक्यं विनेति क० ग० घ० च० ।

(४) यथेति ख० ङ० पुस्तकान्तरञ्च ।

(५) मनोवाग्देहदो जनैरिति क० घ० च०, मनोवाग्देहतो जनैरिति ग० ।

(६) ऋषिसालोक्यमाप्नुयादिति ख० ङ० पुस्तकान्तरञ्च ।

(७) ज्योतिसनातनमिति क० घ० च० ।

(८) एष श्लोकः ख० ङ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ६, ११२, १ ।

पितॄंस्तस्योपवर्त्तेत[1] क्षीरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम् ।
पावमान[2]मिति ख्यातमनुवाकास्तु सप्त वै[3] ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाग्र इति स्थितः ।
प्रकेतुने[क]ति त्वाङ्गस्तु त्रिशिरा: सूक्तमुत्तरम् ॥१४८॥
त्र्यृचस्तस्य[4] षडाग्नेय्यस्तृचस्तस्ये[ख]ति[5] यः परः ।
तेनेन्द्रमभितुष्टाव स्वप्नान्त इति नः[6] श्रुतिः ॥१४९॥
अभवत्स हि[7] देवानां पुरोधाः प्रियकाम्यया[8] ।
असुराणां स्वसुः पुत्त्रस्त्रिशिरा विश्वरूपभृत् ॥१५०॥
तमृषिं प्रहित[9]न्त्विन्द्रो देवेषु बुबुधेऽसुरैः ।

---

(१) उपतिष्ठेतेति ङ० पुस्तकान्तरञ्च ।

(२) वीजमात्रमिति ख० ।

(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(४) तस्येति ङ० ।

(५) तृचस्यास्येतीति ङ० ।

(६) न श्रुतिरिति क० घ० च०, श्रुतमिति ङ०, पुस्तकान्तरञ्च । एष श्लोकः ख० चिह्नितपुस्तके न पठितः ।

(७) स ह्येति ख० ङ० ।

(८) त्वयकाम्ययेति ख० ङ० पुस्तकान्तरञ्च ।

(९) तं सृजन् प्रहितः इति क० घ० च० । महित इति ग० ।

---

(क) ऋ० १०, ८, १ । (ख) ऋ० १०, ८, ७ ।

सोऽस्य वज्रेण तान्याशु[१] शिरांसि त्रीण्यचिच्छिदत्[२] ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापानमन्नादं तित्तिरि[३]स्त्वभूत् ॥१५२॥
तं वागभ्यवदद्ब्राह्मी[४] ब्रह्महासि शतक्रतो ।
प्रपन्नं हतवान् यस्माद्[५] विश्वरूपं पराङ्मुखम् ॥१५३॥
तमभ्यषिञ्चत् सूक्तेन ऋषि[६]राप[क] इति स्वयम् ।
सिन्धुद्वीपोपनुत्यर्थं तस्याश्लीलस्य पाप्मनः ॥१५४॥
मैथुनार्थमभीप्सन्तीं प्रत्याचष्टे यमीं यमः ।
ओचित् सखायं[ख][७] संवादो[८] विवस्वत्सु तयोस्तयोः॥१५५॥
वृषा[ग]ग्नेये हविर्धाने युजे वा[घ]मत्र[९] संस्तुते ।
परेयिवांस[ङ]मित्यत्र स्तूयते मध्यमो यमः[१०] ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्यास्तु इति क० घ० च० ।
(२) तान्यास्तु शिरांसि त्रीण्ययाच्छिददिति ग०। शिरांस्येवाच्छिदत् प्रभुः इति ख० पुस्तकान्तरञ्च ।
(३) तित्तिरः इति ख० ङ० पुस्तकान्तरञ्च ।
(४) तीव्रेति क० घ० च० ।
(५) यस्त्वमिति क० घ० च० ।
(६) ह्यृषिरिति क० ग० घ० च० ।
(७) तदोचिदितीति क० ग० घ० च० ।
(८) संवादे इति क० घ० च० ।
(९) युजत्येतेनेति क० ग० घ० च० ।
(१०) इत्येतस्मिन् स्तूयन्ते द्युमत्तयः इति क० घ० च० ।

---

(क) ऋ० १०, ९, १ । (ख) ऋ० १०, १०, १ । (ग) ऋ० १०, ११, १ ।
(घ) ऋ० १०, १३, १ । (ङ) ऋ० १०, १४, १ ।

अथर्व्वाणोऽथ भृगवः पितरोऽङ्गिरस[क]श्च ह।
षष्ठ्यां देवगणास्तत्र संस्तूयन्ते द्युभक्तयः॥१५७॥
पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यमः।
मन्त्रेषु वज्रग्नः पादे विवस्वन्तं पिता हि सः॥१५८॥
संस्कार्य्यप्रेतसंयुक्तैः पितृभिः स्तूयते यमः।
प्रेहि प्रेही[ख]ति तिसृषु प्रेताग्निष उदाहृताः॥१५९॥
पितॄणां हि पति र्द्देवो यमस्तस्मात् स सूक्तभाक्(१)।
अतिद्रव[ग]दृचे श्वानौ परं पित्र्यमुदीरितम्(२)॥१६०॥
परेणैव(३) तु सूक्तेन श्मशाने कर्म्म शंसति(४)।
पितृदेवासुराणाञ्च अभवन्नग्नयस्त्रयः॥१६१॥
हव्यकव्यवहौ चोभौ सह रक्षाश्विना सह(५)।
तत्र मैन[घ]मिति त्वेतत्कव्यवाहनसंस्तुतिः(६)॥१६२॥

---

(१) अथर्व्वाणोऽथ भृगवः इत्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(२) उदीरतामिति क० ग० घ० च०।
(३) उत्तरेणेति ग०।
(४) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न पठितम्।
(५) सहरक्षा च नामयः इति ख० ङ० पुस्तकान्तरञ्च।
(६) त्वाह कव्यवाहनमेवचेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, १४, ६। (ख) ऋ० १०, १४, ७। (ग) ऋ० १०, १४, १०।
(घ) ऋ० १०, १६, १।

इतराणि तु देवस्य[१] स्तुतिर्नास्यासुरस्य च[२] ।
अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह[३] ॥१६३॥
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते ।
ततः सरण्व्यां[४] जज्ञाते यमयम्यौ विवस्वतः ।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यान्तु वै यमः ॥१६४॥

इति बृहद्देवतायां षष्ठोऽध्यायः ॥६॥

---

(१) दैवस्येति ग०, दैव्यस्येति ङ० ।
(२) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(३) सष्टश्री च हेति क० घ० च० ।
(४) सरण्व्या इति ख० ङ० पुस्तकान्तरञ्च ।

# अथ सप्तमोऽध्यायः ।



सृष्ट्वा[१] भर्तुः परोक्षन्तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनं[२] तस्यामश्वा भूत्वापचक्रमे[३] ॥ १ ॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[४] विवस्वानिव तेजसा ॥ २ ॥
स विज्ञाय[५] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वाश्वलक्षणः[६] ॥ ३ ॥
सरण्यूस्तु[७] विवस्वन्तं विदित्वा[८] हयरूपिणम्[९] ।

---

(१) सृष्टेति क० घ० च० ।
(२) मैथुनमिति पाठः साधुः ।
(३) अश्वो भूत्वोपचक्रमे इति क० घ० च० ।
(४) राजर्षिरासीत् स मनुरिति ख० ङ० पुस्तकान्तरञ्च ।
(५) विज्ञाप्येति ग० ।
(६) सलक्षणः इति क० घ० च०, स्वलक्षणः इति ग० ।
(७) तमिति ख० ङ० पुस्तकान्तरञ्च ।
(८) विज्ञायेति ख० ङ० पुस्तकान्तरञ्च ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम[१] तांश्च तत्रारुरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च[२] सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ सुतावश्विनाविति[३] ॥६॥
इतिहासमिमं यास्कः सरण्यूदेवते तृचे[४] ।
विवस्वतश्च त्वष्टुश्च त्वष्टे[क]ति सह मन्यते ॥७॥
पूषे[ख]ति पादौ पौष्णौ द्वौ त्वाग्नेया[५]वुत्तरौ तु यौ ।
स्यात्तृतीयोऽपि वा पौष्णस्तिस्रश्चान्याः परास्तु याः[६] ॥८॥
अपां स्तुतिस्तृगन्चैका[७] तृचात्सारस्वतात्परा ।
स्तुतः परोचः सोमस्तु द्रप्स[ग] इत्युत्तरे तृचे ॥९॥
अब्देवताशीर्वादो[८] वा पयस्वत्यु[घ]त्तरा तु या ।

(१) मिथुनायापचक्रामेति ख० ङ० पुस्तकान्तरञ्च ।
(२) उपजिघ्रतीति क० घ० च० ।
(३) यौ तु तौ वाजिनावितीति क० घ० च० ।
(४) ऋचाविति क० घ० च०, तृचे इति ङ० पुस्तकान्तरञ्च ।
(५) द्वावाग्नेय्याविति ङ० पुस्तकान्तरञ्च ।
(६) पौष्णस्तस्यापरस्तृच इति ख० ङ० पुस्तकान्तरञ्च ।
(७) अपां स्तुति स्तुतिस्त्वेकेति ख०, अपां स्तुतिस्तुतत्वैकेति ङ० पुस्तकान्तरञ्च ।
(८) अब्देवत्याशीर्वादः इति ख० ङ०, पुस्तकान्तरञ्च ।

(क) ऋ० १०, १७, १ । (ख) ऋ० १०, १७, ३ । (ग) ऋ० १०, १७, ११ ।
(घ) ऋ० १०, १७, १४ ।

चतस्रस्ताः स्तुतिर्मृत्यो[क]रन्ते क्लिप्ताश्च[१] कर्म्मणि ॥१०॥
मृतग्निष्टेभ्य आम्नास्त इमे[ख] ज्योग्जीवनं पुनः।
इमं जीवेभ्य[ग] आम्नास्ते तेभ्यः परिधिकर्म्मणि[२] ॥११॥
यथा[घ] धात्र्युत्तरा त्वाष्ट्री ततो यान्या इमा[ङ]स्त्विति[३]।
स्त्रीणामाग्निषमाम्नास्ते तथैवाञ्जनकर्मणि[४] ॥१२॥
उदीर्ष्व नारीत्यनया मृत[च]पत्नी तु रोहती[५]।
भ्राता कनीयान् प्रेतस्य निगदात्[६] प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म्म होता देवरो न भवेद्यदि।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्म्मोऽयं भवेन्न वा[७]।
शान्त्यर्थं धनुरादाने प्रेतस्यर्चं धनु[छ]र्जपेत्[८] ॥१५॥

---

(१) त्विति ङ०।
(२) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) यथधात्र्युत्तरत्वाष्ट्री ततो यान्या इमात्वितीति ख० ङ० पुस्तकान्तरञ्च।
(४) तथा परिधिकर्म्मणीति क० ग० घ० च०।
(५) मृतं पत्न्यनुरोहतीति पाठः साधुः। मृतमन्वारुरोहतीति क० घ० च०।
(६) निगतेति क० घ० च०, निगत्वेति ग०।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नायच्यत।
(८) शान्त्यर्थं च जपत्यस्यां, धनुरित्युत्तरामृचमिति क० ग० घ० च०।

---

(क) ऋ० १०, १८, २। (ख) ऋ० १०, १८, ३। (ग) ऋ० १०, १८, ४।
(घ) ऋ० १०, १८, ५। (ङ) ऋ० १०, १८, ७। (च) ऋ० १०, १८, ८।
(छ) ऋ० १०, १८, ९।

यस्मादेताः प्रयुज्यन्ते श्मशाने चान्त्यकर्म्मणि[१] ।
तस्माद्ददेत्तृचस्या[२]स्य देवतां मृत्युरेव[३] तु ॥१६॥
मन्त्रेषु ह्यनिरुक्तेषु देवतां कर्म्मतो वदेत् ।
मन्त्रतः कर्म्मतश्चैव प्रजापतिरसम्भवे[४] ॥१७॥
परास्त्वतस्रो यास्त्वत्र उपसर्प[क]ति पार्थिवी ।
तासां प्रयोगः प्रेतस्य अस्थिसञ्चयकर्म्मणि ॥१८॥
प्रतीचीने[ख]यथाहानि अपद्धत्येतराणि तु[५] ।
अहःसु[६] पितरो दद्युरित्याशास्ते[७]ऽन्त्ययाशिषः[८] ॥१९॥
अहःस्वागामिषु च मां द्रयतः[९] समजीवयन्[१०] ।
निवर्त्तध्व[ग]मिदं सूक्तं[११] गवां केचिदपां विदुः ॥२०॥
अर्द्धर्चः प्रथमायास्तु[१२] अग्नीषोमीय उत्तरः ।

(१) एते प्रयुज्यन्ते श्मशानेष्वन्तकर्म्मस्विति क० ग० घ० च० ।
(२) तृचस्येति क० ग० घ० च० ।
(३) मृत्युमेवेति पाठः समीचीनः ।
(४) इदं जगाविति क० घ० च० ।
(५) प्रतीचीनमृचं त्वेतामपह्न्योत्तरासु तत् इति ख० ङ० पुस्तकान्तरञ्च ।
(६) अहस्स्विति ख० ङ० पुस्तकान्तरञ्च ।
(७) दध्युरभ्याशास्ते इति क० घ० च० ।
(८) दद्युरभ्याशास्ते समाशिषः इति ग० ।
(९) प्रयतः इति ख० ।
(१०) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(११) इतीदन्त्विति क० ग० घ० च० ।
(१२) चेति ख० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० १०, १८, १० । (ख) ऋ० १०, १८, १४ ॥ (ग) ऋ० १०, १९, १ ।

| | | |
|---|---|---|
| Pingala Chhandah Sútra, (Sans.) Fasc. II—III @ /6/ each | Rs. 0 | 1 |
| Prithiráj Rásau, (Sans.) Part I, Fasc. I, Part II, Fasc. I—V @ /6/ each | 2 | 4 |
| Ditto (English) Part II Fasc. I .. .. .. | 0 | 12 |
| Prákrita Lakshaṇam, (Sans.) Fasc. I .. .. .. | 1 | 8 |
| Parásara Smriti (Sans.) Vol. I, Fasc. 1—8, Vol. II, Fasc. 1—3, @ /6/ each | 4 | 2 |
| Paráśara, Institutes of (English) .. .. .. .. | 0 | 12 |
| S'rauta Sútra of A'pastamba, (Sans.) Fasc. I—XII @ /6/ each .. | 4 | 8 |
| Ditto A'śvaláyana, (Sans.) Fasc. I—XI @ /6/ each .. | 4 | 2 |
| Ditto Látyáyana (Sans.) Fasc. I—IX @ /6/ each .. | 3 | 6 |
| Ditto S'ánkháyana (Sans.) Vol. I, Fasc. 1—7, Vol. II, Fasc. 1—2, @ /6/ each .. .. .. | 3 | 6 |
| Sáma Veda Saṃhitá, (Sans.) Vols. I, Fasc. 3—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /6/ each Fasc. .. .. .. | 13 | 2 |
| Saṃkhya Sutra Vritti (Sans.) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Sánkhya Aphorisms of Kapila, (English) Fasc. I and II @ /6/ each .. | 0 | 12 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. .. | 0 | 6 |
| Sankara Vijaya, (Sans.) Fasc. II and III @ /6/ each .. .. | 0 | 12 |
| Sánkhya Pravachana Bháshya, Fasc. III (English preface only) .. | 0 | 6 |
| S'ri Bháshyam, (Sans.) Fasc. I—II @ /6/ each .. .. .. | 0 | 12 |
| Suśruta Saṃhitá, (Eng.) Fasc. I and II @ /12/ each .. .. | 1 | 8 |
| Taittiríya A'raṇya (Sans.) Fasc. I—XI @ /6/ each .. .. | 4 | 2 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /6/ each .. .. | 9 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc. IX—XXXV @ /6/ each .. .. | 10 | 2 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /6/ each .. .. | 1 | 2 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /6/ each | 0 | 12 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /6/ each .. .. | 7 | 2 |
| Tattva Chintámaṇi, Vol. I, Fasc. 1—9; Vol. II, 1—5 (Sans.) @ /6/ each | 5 | 4 |
| Tul'sí Sat'saí, (Sans.) Fasc. I—III @ /6/ each .. .. .. | 1 | 2 |
| Uttara Naishadha, (Sans.) Fasc. III, V—XII @ /6/ each .. .. | 3 | 6 |
| Uvásagadasáo, (Sans.) Fasc. I—VI @ /12/ .. .. .. | 4 | 8 |
| Varáha Puráṇa, (Sans.) Fasc. I—XIII @ /6/ each .. .. | 4 | 4 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. I—VI; Vol. II, Fasc. I—VII, @ /6/ each Fasc. .. .. .. .. .. | 4 | 14 |
| Vishṇu Smriti, (Sans.) Fasc. I—II @ /6/ each .. .. | 0 | 12 |
| Vivádáratnákara, (Sans.) Fasc. I—VII @ /6/ each .. .. | 2 | 10 |
| Vrihannáradíya Puráṇa, (Sans.) Fasc. I—V @ /6/ .. .. | 1 | 14 |
| Yoga Sútra of Patañjali, (Sans. & English) Fasc. I—V @ /14/ each .. | 4 | 6 |

*Tibetan Series.*

| | | |
|---|---|---|
| Sher-Phyin—Fasc. I—V @ 1/ each .. .. .. | 5 | 0 |
| *R*togs br*j*o*d* *d*pag bsam *h*khri S'iñ (Tibetan & Sans.) Fasc. I—II @ 1/ .. | 2 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Alamgírnámah, with Index, (Text) Fasc. I—XIII @ /6/ each .. | 4 | 14 |
| A'ín-i-Akbarí, (Text) Fasc. I—XXII @ 1/ each .. .. | 22 | 0 |
| Ditto (English) Vol. I (Fasc. I—VII) .. .. .. | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXXVII @ 1/ each | 37 | 0 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /6/ each .. | 7 | 2 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to., thin paper .. | 4 | 8 |
| Catalogue of Persian books and MSS. in the library of A. S. B., Fasc. I | 1 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. I—XXI @ 1/ each .. .. .. .. .. .. | 21 | 0 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/ each .. .. | 14 | 0 |
| Fihrist-i-Ṭúsí, or, Túsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. .. | 3 | 0 |
| Futúḥ-ul-Shám Waqidí, (Text) Fasc. I—IX @ /6/ each .. .. | 3 | 6 |
| Ditto Azádí, (Text) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Haft A'smán, History of the Persian Mansawi (Text) Fasc. I .. | 0 | 12 |
| History of the Caliphs, (English) Fasc. I—VI @ /12/ each .. | 4 | 8 |
| Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /6/ each .. | 1 | 2 |
| Iṣabáh, with Supplement, (Text) 51 Fasc. @ /12/ each .. .. | 38 | 4 |
| Maásir-ul-Umara, Vol. I, Fasc. 1—9, Vol. II, 1—9 Vol. III, 1—3 @ /6/ each .. .. .. .. .. .. | 7 | 14 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /6/ each .. .. | 1 | 14 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /6/ each .. | 5 | 10 |
| Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I—V @ /12/ each .. | 3 | 12 |

(*Turn over.*)

Muntakhab-ul-Lubáb, (Text) Fasc. I—XIX @ /6/ each .. Rs. 7 4

Mu'áṣir-i-'Alamgírí (Text), Fasc. I—VI @ /6/ each .. .. 2 2

Nokhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0 6

Nizámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ /12/ each .. 1 8

Riyazu-s-Salátín, (Text) Fasc. I .. .. .. .. 0 6

Suyúty's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/ each .. .. .. 7 0

Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /6/ each .. .. 1 14

Ditto (English) Fasc. I—XIV @ /12/ each .. .. 10 8

Táríkh-i-Fírúz Sháhí of Ziaa-al-dín Barní (Text) Fasc. I—VII @ /6/ each 2 10

Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /6/ each .. .. 3 6

Táríkh-i-Fírozsháhí, of Shams-i-Siráj Afif. (Text) Fasc. I—V @ /6/ each 1 14

Wís o Rámín, (Text) Fasc. I—V @ /6/ each .. .. .. 1 14

Zafarnámah, Vol. I, Fasc. I—IX, Vol. II. Fasc. I—VIII @ /6/ each .. 6 6

Túzak-i-Zehángírí (English) Fasc. I .. .. .. 0 12

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ /10/ each .. Rs. 80 0
   Ditto Index to Vols. I—XVIII .. .. 5 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /6/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1850 (7), 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6) 1886 (8), 1887 (7). @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers,

   *N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Centenary Review of the Researches of the Society from 1784—1883 .. 3 0
   General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B, 1864) .. .. .. .. .. 1 8
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. 1 8
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. .. 3 0
   Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 3 0
   Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. 3 0
5. Anis-ul-Musharrahin .. .. .. .. .. 3 0
6. Catalogue of Fossil Vertebrata .. .. .. .. 2 0
7. Catalogue of the Library of the Asiatic Society, Bengal .. .. 3 8
8. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. .. 2 0
9. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1 8
10. Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. 1 0
11. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32 0
12. Jawámi-ul-'ilm ir-riyáẓi, 168 pages with 17 plates, 4to. Part I .. 2 0
13. Khizánat-ul-'ilm .. .. .. .. .. 4 0
14. Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. 40 0
15. Moore and Hewitson's Descriptions of New Indian Lepidoptera,

...d Plates. 4to. @ 6/ each .. .. 18 0

...eya Purana), Sanskrit .. .. 1 0

.. .. .. .. 4 0

...a de Körös .. .. .. 10 0

" .. .. .. 8 0

... G. E. Fryer .. .. .. 2 0

---

...ts, Fasc. I—XXIII @ 1/ each .. 23 0

...iterature, by Dr. R. L. Mitra .. .. 5 0

N. B. All Cheques Money Orders &c. must be made payable to the "Treasurer Asiatic Society" only.

